deration. Prasannarâghava, the title of the play, has a very near resemblance with and therefore seems to be borrowed from Murâri's play, called Anarghyarághava. Udâttarâghava is a play of a comparatively later date. It is a remarkable feature of the Prasannarâghava that the Prakrit language is very scantily used in it. Last of all, it should be noticed that the poet seems to have divided his play into two parts, the first part comprising the first four acts and the second the next three. The chief clue to this inference of ours is the occurrence of the verse, यशःपूरं दूरं &c., possessing the value of a *Bharatavâkya* in all respects, at the end of the fourth act, and the repetition of the same about the end of the seventh.

## A list of works quoted or consulted with their Abbreviations where used.

| | |
|---|---|
| Anargharâghava. ...... | ( A. R. ) |
| Bhâminîvilâsa. ...... | ( B. V. ) |
| Bharatachampu. ...... | ( B. C. ) |
| Bhartri's Shatakas...... | (Bh. N. denoting Nıti and V. Vairâgya.) |
| Chandrâloka. ...... | (Chandr. ) |
| Das'arúpa. ...... | ( D. R. ) |
| Dowson. ...... | |
| Gîtagovinda. ...... | ( Gît. ) |
| Indian Antiquary ...... | |
| Kâvyaprakâsha. ...... | ( K. P. ) |
| Kırtikaumudi ...... | (Kır. K.) |
| Kumârasambhava....... | ( Ku. ) |
| Mahâbhârata. ...... | ( Mb. ) |
| Mahâviracharıta. ...... | ( M C. ) |
| Mâlatimâdhava. ...... | ( Mâl. ) |
| Meghaduta. ...... | ( Me. ) |
| Mukundânanda ...... | |
| Nâgânanda. ...... | ( Nag. ) |
| Raghuvansa. ...... | (R.) |
| Râmâyaṇa. ...... | |
| Ratnâvali. ...... | ( Ratn. ) |
| Shakuntala. ...... | ( S. ) |
| Uttararâmacharita. ...... | (U.) |
| Venisamhâra. ...... | ( Ve. ) |
| Vikramorvasiyam. ...... | ( V. ) |

॥ श्रीः ॥

# प्रसन्नराघवम् ।

## प्रथमोऽङ्कः ।

1 चत्वारः प्रथयन्तु विद्रुमलतारक्ताङ्गुलिश्रेणयः
श्रेयः शोणसरोजकोरकरुचस्ते शार्ङ्गिणः पाणयः ।
भालेष्वब्जभुवो लिखन्ति युगपद्ये पुण्यवर्णावलीः
कस्तूरीमकरीः पयोधरयुगे गण्डद्वये च श्रियः ॥ १ ॥

अपि च ।

आकल्पं मुरजिन्मुखेन्दुबहलोन्मीलन्मरुन्माधुरी-
धीरोदात्तमनोहरः सुखयतु त्वां पाञ्चजन्यध्वनिः ।
लीलालङ्घितमेघनादविभवो यः कुम्भकर्णव्यथा-
दायी दानवदन्तिनां दशमुखं दिक्चक्रमाक्रामति ॥ २ ॥

अन्यच्च ।

नाभीपद्मवसच्चतुर्मुखमुखोद्गीतस्तवाकर्णन-
प्रोन्मीलत्कमनीयलोचनकलाखेलन्मुखेन्दुद्युतिः ।
सक्रोधं मधुकैटभौ सकरुणस्नेहं सुतामम्बुधेः
साश्वासप्रणयं सरोजवसतिं पश्यन्हरिः पातु वः ॥ ३ ॥

---

1. A. बहुल & D. G. मधुर for बहल. A. गुणोत्तरः for मनोहरः. A. B. निर्जित for लङ्घित. C. E F. निनदः for विभव.. A. B. कारी for दायी; & आस्कन्दति. A. अपि च. A. B. D. गीर्ण for गीत. A. °कैटभे. B. सोच्छ्वास & D. G. सोत्प्रास.

नान्द्यन्ते ।

2 सूत्रधारः । परितो विलोक्य सहर्षम् । अये कथममी निजवदनशारदारविन्दनर्तितगिरिनन्दिनीनयनखञ्जनस्य निखिलमुनिजनहृदयरञ्जनस्य विकटजटापटलोत्सङ्गरङ्गताण्डवितगङ्गातरङ्गनिकरस्य मन्दाकिनीचन्दनललाटिकायमानमुकुटोपनीतनूतनसुधाकरस्य त्रिभुवननलिननिर्माणनिर्मलबिसाङ्कुरस्य भगवतः शङ्करस्य यात्रायां परिमिलिता एव पारिषदाः । तदेतानुपगम्य निजकलावलोकनप्रसादाय तावदभ्यर्थयामि । विमृश्य । अथवा किमभ्यर्थनया ।

आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम् ।
गर्भस्थं केतकीपुष्पमामोदेनैव षट्पदाः ॥ ४ ॥

विलोक्य सहर्षम् । नूनमेतदभिसंधानादेव सामाजिकसमाजादितोऽभिवर्तते सखा मे रङ्गतरङ्गः ।

3 प्रविश्य नटः । भाव इदं मन्मुखेन भवन्तमुदीरयन्ति सामाजिकाः । यत्किल अये भरताधिराज । इत्यर्धोक्ते ।

4 सूत्र० । कर्णौ पिधाय । अहह असमञ्जसमसमञ्जसम् । भवतु । कार्यं तावदाकर्णयामि ।

---

2. D. om. अये. A. B om. निखिल. B. नन्दन for रञ्जन. F. कलाप & G पाटल for पटल. C. G. om. रङ्ग. A. B नलिनी. G. adds श्री before शङ्करस्य. F. G. मीलिता. B. D. G. विलोकन. A. B. अभ्यर्थये. A. om. अथवा. C. E. G. add यतः before the verse. F. पत्र for पुष्प. A. B. C. D. E. इव for एव. A. समासा°. A. B. add अयम् after इतः & om. सखा मे.

3. D. om. इदम्. C. D. E. F G. add एव after मुखेन. A. om. यत्किल. D. om अये & F. आर्य. A. om इत्यर्धोक्ते. B. °उक्तौ.

4. A. D. om. one असमञ्जसम्.

5 नटः । भाव अधुना मयैव भवत्सकाशादाकर्णनीयं किमिदमसमञ्जसमिति ।

6 सूत्र० । नन्विदमेव यत्किल नन्दति ज्यायसि कनीयसि राजपदमुपन्यस्यते । अहं हि भरतमात्रक एव । मम पुनरग्रजन्मा गुणारामनामा राजपदभाजनम् ।

7 नटः । भाव कीदृग्गुणस्ते गुणारामः ।

8 सूत्र० । ननु नाम्नैव दत्तमुत्तरम् ।

9 नटः । कथं नाम्नैव गुणावगमः ।

10 सूत्र० । अथ किम् ।

गुणग्रामाविसंवादि नामापि हि महात्मनाम् ।
यथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः ॥ ९ ॥

अपि च किमिदं गुणारामेऽपि नाम्नैव गुणावगम इत्युच्यते । यः खलु रतिजनकनामधेयस्य राज्ञः सदसि हरचापारोपणं नाम नाटकमभिनीय परितुष्टेन राज्ञा समर्पितां रङ्गविद्याधरख्यातिं प्रियामिव समासादितवान् ।

11 नटः । स पुनः संप्रति कं देशमभिनन्दयति ।

---

5. A. मारिषः for नटः. B. एतावत् for एव. A. B. G. तत् for इदम्.

6. A. B. add इति after उपन्यस्यते. A. तु ज्यायान् भ्राता & B. तु भ्राता ज्यायान् after मम. A. °मो for °मनामा

7. C. D. E. G. om. भाव. A. कीदृशः.

8. A. B. om. ननु. F. नाम for नाम्ना. C. D. E. F. G. दत्तोत्तरम्.

10. D. गुणानाम् for गुणग्राम. G. अभि° for अवि°. A. om. गुणारामे A. G. om अपि. D. G. add कथम् before नाम्ना. C. E. F. have नाम्नैव before गुणा°. A. G. °जनकस्य. G. om. नामधेयस्य. A. B. नरपतेः. C. D. E F. G. रूपक. B. तेन after °तुष्टेन. A. °ता रङ्गविद्या इत्या°. B. इतिख्या°. G. आख्या°. A. om. सम्.

11. B. आनन्द°.

12 सूत्र०। केनापि दाक्षिणात्येन नटापसदेन मदीयमेवेदं गुणारामनामेति वदता रङ्गविद्याधरख्यातिरपहृता। तदाकर्ण्य गुणारामस्तामेव दिशं प्रचलितः। अधुना च श्रुतमस्माभिर्यत्किल सुकण्ठनाम्ना गायकेन सह मैत्रीं विधाय दाक्षिणात्यानां भूभुजां सदसि तेन सह रङ्गसङ्गरमुपक्रान्तवानिति।

13 नटः। अहो महानुपक्रमः।

14 सूत्र०। उचितमिदम्। यतः

कीर्तिं मृणालकमनीयभुजामनिन्द्र-
चन्द्राननां सितसरोरुहचारुनेत्राम्।
ज्योत्स्नास्मितामपहृतां दयितामिव स्वां
लब्धुं न कः परमुपक्रममातनोति ॥ ६ ॥

तत्कथय कार्यम्।

15 नटः। इदमेव यत्किल त्वयाभिनीयमानमवलोकयामः

प्रत्यङ्गमङ्कुरितसर्वरसाभिरामं
नव्योल्लसत्कुसुमराजिविराजिबन्धम्।
घर्मेतरांशुमिव वक्रतयापि रम्यं
नाट्यप्रबन्धमतिमञ्जुलसंविधानम् ॥ ७ ॥

16 सूत्र०। तत्कथं पुनरवधारणीयं किंनामधेयं नाटकमिति।

---

12. C. D. E. F. add हि after अपि. G. om. इदम्. A. B. E. F. add इति before नाम. A. B. om. इति after नाम. A. इत्याख्या°. B. इतिख्या°. G. आख्या°. B. add इदम् after श्रुतम्.

14. G. कीर्तिः. B. G. स्मित for सित. A. °ममुद्य° for °मुपक्र°.

15. A. B. वि for अव. C. D. E. F. add इति after विलोकयाम & अवतार for अभिराम. G. °रामनव्य°. F. विचित्र for विराजि. G. °ञ्जुरिव. D. G. अति for अपि. A. सन्धिभागम्.

16. A. om. तत्. F. om. धेयम्. C. सहासम्, G. सहर्षम् after विमृ

विमृश्य । कथं करस्थमेव चामीकरं रथ्यायां मृगयमाणस्य सरणिमनुसृतोऽस्मि । नन्विहैव श्लोकेऽष्टपङ्क्तिक्रमलिखिते स्फुटमस्ति प्रसन्नराघवनामेति ।

17 नटः । तमेव श्लोकं पठित्वा सहर्षम् । अहो देव्याः कविकुलकुमुदवन-विकासचन्द्रिकायाः प्रसादमहिमा सरस्वत्याः । यस्मादेवंविधाः कवीनां विचित्रमधुराः सूक्तयः समुल्लसन्ति ।

18 सूत्र० । एवमेतत् । नन्वनेनैव कविनोक्तम् ।

वाणि त्वत्पदपद्मरेणुकणिका या स्वान्तभूमिं सतां
संप्राप्ता कविताऌता परिणता सैवेयमुज्जृम्भते ।
त्वत्कर्णेऽपि चिराय यत्किसलयं सूक्तापदेशं शिरः-
कम्पभ्रंशितपारिजातकलिकागुच्छे विधत्ते पदम् ॥ ८ ॥

पुनर्विभाव्य । मम पुनः कविकुलकमलसद्मानि मुनौ वल्मीकजन्मनि मनः कौतुकितम् । यस्यैकमपि वदनारविन्दमासाद्य चतुर्मुखमुखकमलवनविहारविनोदमनुभवति भारती नाम राजहंसी ।

19 नटः । एवमेतत् । त्रिभुवनाभोगेऽपि हि

---

श्य. C. D. G. om. कथं...स्मि ; & with B. E. F. add अये कथमहं निजशिरः शेखर ( B. om. शेखर ) शयाल्वपि नीलोत्पलं रत्नाकरचपलवीचिमालापरिसरे विचारयामि. A. सनिवेशविशेषेण विन्यस्तम् for श्लोके...स्फुटम्. G. क्रमात् F. आस्ते. A. C. °व नाम. B. °वं नाम नाटकम् D. °व नाट्यम्.

17. B. F. read नान्विहैव संनिवेशविशेषेण विन्यस्तमस्ति प्रसन्नराघवं नामेति before तमेव &c. A. om. देव्याः. G. only has कुल. C. E. F. वदन for वन, while G. has neither. A. om. विकास and F. विकासि. A. B. सरस्वत्याः प्रसादमहिमा. C. D. E. F. G. यत्प्रसादात् for यस्मात्. A. B. अयम् ( which B. om. ) एवंविध : कवीनां विचित्रमधुरः सारस्वतोद्गार : ( A. adds समुल्लसति स्म. )

18. A. B. om. ननु. A. C. E. add हि after एव. B. only has कुल after कवि. D. G. om. one मुख.

भास्वद्वंशवतंसकीर्तिरमणीरङ्गप्रसङ्गस्वन-
द्वादित्रप्रथमध्वनिर्विजयते वल्मीकजन्मा मुनिः ।
पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किम-
प्याकल्पं कविनूतनाम्बुदमयी कादम्बिनी वर्षति ॥ ९ ॥

विमृश्य । मम तु रामचन्द्र एव निर्भरमानन्दितोऽयं चित्तचकोरः । यत्कीर्तिचान्द्रिकाचुम्बितोऽयं वाल्मीकेरपि सारस्वतसागरः समुल्लास ।

20 सूत्र० । इत्थमिदम् ।

चन्द्रे च रामचन्द्रे च कान्तानां च दृगञ्चले ।
नीलोत्पलसुहृत्कान्तौ कस्य नो मोदते मनः ॥ १० ॥

अपि च

झटिति जगतीमागच्छन्त्याः पितामहविष्टपा-
न्महति पथि यो देव्या वाचः श्रमः समजायत ।
अपि कथमसौ मुञ्चेदेनां न चेदवगाहते
रघुपतिगुणग्रामश्लाघासुधामयदीर्घिकाम् ॥ ११ ॥

21 नटः । कथं पुनरमी कवयः सर्वेऽपि रामचन्द्रमेव वर्णयन्ति ।

22 सूत्र० । नायं कवीनां दोषः । यतः

स्वसूक्तीनां पात्रं रघुतिलकमेकं कलयतां
कवीनां को दोषः स तु गुणगणानामवगुणः ।
यदेतैर्निःशेषैरपरगुणलुब्धैरिव जग-
त्यसावेकश्चक्रे सततसुखसंवासवसतिः ॥ १२ ॥

19. G. अवतंस. A. कविः for मुनिः. A. C. E. F. om. विमृश्य. A. B. परम् for एव. F. om. चन्द्रिका. A. B. समुल्लसति स्म.

20. G. युक्तम् for इत्थम् ; & नारीणाम्. All except D. have नामोदते. A. G. एनम्.

21. C. D. E. F. G. om. अपि. A. has केवलमुप° & B. F. कुसुमारामामिव मधुव्रताः केवलमुप° before वर्णयन्ति.

22. A om. नायं...दोषः. A. B. F. om. यतः. B. F. °तिलकमेवा°. C. D. °करः for °गुणः. B. अस्नि

अपि च भोः

बीजं यस्य चिरार्जितं सुचरितं प्रज्ञा नवीनोऽङ्कुरः
काण्डं पण्डितमण्डलीपरिचयः काव्यं नवः पल्लवः ।
कीर्तिः पुष्पपरम्परा परिणतः सोऽयं कवित्वद्रुमः
किं वन्ध्यः क्रियते विना रघुकुलोत्तंसप्रशंसाफलम् ॥ १३ ॥

23 नटः । कः पुनरस्य कविः ।

24 सूत्र० । सप्रणयकोपम् ।

विलासो यद्वाचाममृतरसनिष्यन्दमधुरः
कुरङ्गाक्षीबिम्बाधरमधरभावं गमयति ।
कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः ॥ १४ ॥

अपि च

लक्ष्मणस्येव यस्यास्य सुमित्रागर्भजन्मनः ।
रामचन्द्रपदाम्भोजे भ्रमद्भृङ्गायते मनः ॥ १५ ॥

25 नटः । कथमविदितचन्द्रमसश्चकोरकिशोरकस्य चारितमनुसृतोऽस्मि । तेन हि मम हस्ते निजनाटकमर्पयित्वेदमुक्तोऽस्मि । रक्षणीयमिदं सूक्तिरत्नं चोरेभ्य इति । स च मया सविनयमिदमुक्तः ।

कर्णे निधाय च विधाय च कण्ठपीठे
धृत्वा च मूर्धनि नते हृदये च कृत्वा ।

---

न्वैरितर°. D. अपिच for अपर. C. E. प्रज्ञानवीजाङ्कुरः. D. F. प्रज्ञा नवीनाङ्कुरः. G. काण्डः. B. सूक्ति for कीर्ति. A. B. C. E. F. °परिणातिः. D. फलैः.

24. A. B. G. असम for अमृत. D. G. °मधुर° for °मधर°. C. किमिह न & om. अपि च. G. कुक्षि for गर्भ.

25. A. B. चन्द्रचरितस्य. A. om. किशोरक. C. E. °किशोरस्य. B. येन. D. नव्न (न्व) हम् for मम हस्ते. D. विधाय for निधाय. A. G. पिधाय & D निधाय for विधाय. A. B. कृत्वा for धृत्वा. B. तत for नते. A. B. धृत्वा for कृत्वा. B. C. E.

चोरप्रचारचकितेन चिरं मयैष
त्वत्सूक्तिमौक्तिकगणः परिरक्षणीयः ॥ १६ ॥

26 सूत्र० । केयमलीकशङ्का तस्य कवेः ।

सुललितवचनामुदारवृत्तां
कृतिमथवा युवतिं परस्य हृत्वा ।
तटमपि परमर्णवस्य गत्वा
वद कतरः शुभभाजनं जनः स्यात् ॥ १७ ॥

27 नटः । एवमेतत् । नन्वयं प्रमाणप्रवीणोऽपि श्रूयते । तदिह चन्द्रिकाचण्डातपयोरिव कविताताार्किकत्वयोरेकाधिकरणतामालोक्य विस्मितोऽस्मि ।

28 सूत्र० । क इह विस्मयः ।

येषां कोमलकाव्यकौशलकलालीलावती भारती ।
तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते ।
यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपिता-
स्तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः कराः ॥ १८ ॥

29 नटः । अपि नाम स्वयमेव कविताकोविदाः पारिषदा अस्य सूक्तिभिर्विनोदयिष्यन्ते ।

30 सूत्र० । अथ किम् । नन्वनेनैवोक्तम् ।

---

F. G. °अपहार. D. °अपचार. D. माणि: for गणः .

26. B. कथम् for केयम्. F. G. वदना for वचना. G. सुख for शुभ.

27. A. om. एवमेतत्. A. B. अहमस्य कवि...त्वयोश्चन्द्र...रिव.

28. D. रचना for वचन & गज for करि.

29. A. B. F. read अमी for एव & have कथं भो · ( A. कथम् only ) after अस्य. G. विनोदिष्यन्ते.

30. A. कथं किं न स्वेनैवोक्तम्. B. अथ किं नाम तेनैवोक्तम्. All except A. read सन्तः क्रियन्त.. C. E. नव for घन.

अपि मुहुमुपयान्तो वाग्विलासैः स्वकीयैः
परभणितिषु तोषं यान्ति किं नैव सन्तः ।
निजघनमकरन्दस्यन्दपूर्णालवालः
कलशसलिलसेकं नेहते किं रसालः ॥ १९ ॥

31 नटः । अहो अस्य कवेः सूक्तीनां सरलता कोमलता च ।

32 सूत्र० । क्वचिद्वक्रता कठिनता च ।

33 नटः । कथमेते अपि रमणीये ।

34 सूत्र० । अथ किम् ।

निन्द्यन्ते यदि नाम मन्दमतिभिर्वक्राः कवीनां गिरः
स्तूयन्ते न च नीरसैर्मृगदृशां वक्राः कटाक्षच्छटाः ।
तद्वैदग्ध्यवतां सतामपि मनः किं नेहते वक्रतां
धत्ते किं न हरः किरीटशिखरे वक्रां कलामैन्दवीम् ॥ २० ॥

अपि च ।

अमृतजलधेः पायं पायं पयांसि पयोधरः
किरति करकास्ताराकारा यदि स्फटिकावनौ ।
तदिह तुलनामानीयन्ते क्षणं कठिनाः पुनः
सततममृतस्यन्दोद्गारा गिरः प्रतिभावताम् ॥ २१ ॥

35 नटः । नूनमस्य कवेः किमपि कौतुकप्रमोदमेदुरमन्तःकरणं यदेवंविधाः सरसशीतलाः सूक्तयः समुल्लसन्ति ।

36 सूत्र० । उचितमिदम् । यतः-

---

31. C. D. E. कोमलता सरलता.

33. C. E. F. किम् for कथम्. A. B. ते for एते. D. परमरमणीये.

34 G. कथम् for अथ. B. शिव for हर. D. om. अपि च.

35. A. om. कवेः. B. om. किमपि. C. E. om. कौतुक.

36. All except A. om. यतः.

यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदयवसतिः पञ्चबाणश्च बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय ॥ २२ ॥

अपि च ।

न ब्रह्मविद्या न च राज्यलक्ष्मी-
स्तथा यथेयं कविता कवीनाम् ।
लोकोत्तरे पुंसि निवेश्यमाना
पुत्रीव हर्षं हृदये करोति ॥ २३ ॥

37 नेपथ्ये । साधु भोः कुशीलवकुलावतंस साधु ।

38 सूत्र० । कथमयं भगवतो याज्ञवल्क्यस्य प्रियोऽन्तेवासी दाल्भ्यायन इत एवाभिवर्तते । तदस्यानवलोकनीयचतुर्थवर्णस्य पुरतः स्थातुमनुचितमस्माकम् । तदेहि परतो गच्छावः । इति निष्क्रान्तौ ।

प्रस्तावना ।

39 प्रविश्य दाल्भ्यायनः । तमेव श्लोकं पठित्वा साकूतम् । साधूक्तमनेन । तथा हि । भूपतिरयं जनकोऽपि सकललोकलोचनारविन्दमार्तण्डे क्वचिदपि पुरुषप्रकाण्डे निजां कन्यां समर्पयितुकामोऽस्मद्गुरूपदिष्टायां ब्रह्मविद्यायां कुलक्रमागतायां च राज्यलक्ष्म्यां शिथिलादरः संवृत्तः । कर्णं दत्त्वा । कथमयमाकाशे वीणाध्वनिः श्रूयते ।

D. हासोभासः. All except D. have तु for च.

38. C. D. E. F. भियान्ते. ° B. न पुरतः स्थातुमुचितम्. C. पुरः for पुरतः. A. पुरतः.

39. A. ततः प्रविशति. A. B. om. साकूतम्. B. adds एवमेतत् after अनेन. A. कन्यकाम्. A. B. अयम् for अस्मद्. C. E. क्रमात् D. G. om. च after °गतायाम्. B. F. राज.° B. D. G. add च after °लक्ष्म्याम्. B G. पुनः before कर्णम्. D. कर्णौ. B. मया for अयम्. A. संघट्ट. B. पुनर्विमृश्य

तन्नूनमस्मद्गुरुमभ्यागच्छता समीरसंघट्टनकलक्कणद्बल्लकीगुणेन देवर्षिणा नारदेन भवितव्यम् । विलोक्य । कथं ध्वनिसादृश्येन प्रतारितोऽस्मि । नन्वयं गगनतलावलम्बिनोर्मधुकरयोरेव ध्वनिराकर्ण्यते । पुनः कर्णं दत्त्वा सहर्षविस्मयम् । अहो भगवतो योगीश्वरस्य प्रसादमहिमा । येनाहमेवंविधानामपि वचनावबोधमधुरां सिद्धिमासादितवानस्मि । तदाकर्णयामि तावत्किमेतावालपत इति । कर्णं दत्त्वा । एकः किमाह । सखे कलालाप कुत आगतोऽसि । अपरः किमाह । वयस्य मधुप्रिय सततविकस्वराच्चन्द्रमौलिमौलिमन्दाकिनीकुमुदकाननात् । अहो अनयोश्चतुरालापपेशलता रुचिरनामधेयता च । पुनः कर्णं दत्त्वा । किमाह मधुप्रियः । अस्ति तत्र नवीनः कोऽपि वृत्तान्तः । किमाह कलालापः । अस्ति । अचिरमेव कदापि खलु बलिनन्दनो बाणासुरः कमलमालया भगवन्तमिन्दुमौलिमभ्यर्च्य सविनयमिदमूचिवान् । यत्किल भगवन्

कैलासाधिकसारं किमस्ति वस्तु महीतले ।
यस्मिन्सफलतामेति मम दोर्दण्डमण्डलम् ॥ २४ ॥

---

for विलोक्य. A. B. सादृश्यात्. C. E. F. श्रूयते. A. सहर्ष सविस्मयम्. C. E. F. योगीश्वरस्य भगवतः. D. स्वन for वचन. B. °माधुरीप्रसिद्धिम्. G. om तावत्. A. C. D. E. G. om. इति. A. om. एकः किमाह. B. F. om. किमाह. A. कुत इति प्रष्टव्योऽसि. B. कुत प्रयातोऽसि. A. मुनि before अपरः. F. om. किमाह. B. सखे after वयस्य. D. G. मधुरप्रिय throughout. B. G. सन्तत. A. B. D. G. om. one मौलि. A. C. E. F. °वनात्. D. F. दाल्भ्यायनः before अहो &c. C. आलापपेशलता & आलापपेलवता for नामधेयता. B. C. D. F. G. om. तत्र. A. मुनिः before किमा ... लापः. C. E. F om. कदापि. B. कदाचिदपि. A. ऊचितवान्. D. om. यत्किल भगवन्. A. B. (A. मुनिः ।) किमाह चन्द्रमौलिः

ततश्च विहस्य भगवानिदमाह चन्द्रमौलिः ।

अस्ति मे कार्मुकं दिव्यं न्यस्तं जनकभूभुजि ।
यस्य बाणानले तिस्रः पुरः प्राप्ताः पतङ्गताम् ॥ २९ ॥

तदाकर्ण्य बलिनन्दनो बाणासुरस्तत्कार्मुकं विलोकयितुं मिथिलामागतः । तत्कथय । भवान्कुतः समायातः कीदृशो वा तत्र नवीनो वृत्तान्त इति । किमाह मधुप्रियः । अहमागतोऽस्मि नन्दनवनात् । अथ च तत्र । मया लङ्केश्वरानुचरस्य गर्जितमाकर्णितम् । आः कथं रे नन्दनवनरक्षिणः अद्याप्यनर्चितचन्द्रचूड एव निशाचरचक्रवर्तिनि विलूनसकलप्रसूनं नन्दनवनमिति । ततस्तैरिदमुक्तो निशाचरः । क्षन्तव्यमेतत् । अद्य हि जनकराजकन्यकावीरस्वयंवरविलोकनकौतुकितसकलसुरलोकविमानमण्डनाय महान्कुसुमोपयोगः । तदाकर्ण्य च इममेव वृत्तान्तमुपायनीकरोमि लङ्केश्वरस्येति प्रचलितो निशाचरः । अहमपि कौतुकादिहागतोऽस्मि । सविषादम् । अहो महानयमनर्थाङ्कुरोद्भेदः । यदयं बाणरावणयोः कर्णान्तिके विश्रान्तः सीतास्वयंवरवृत्तान्तः । अथवा अलमतिकातरतया । भ्रमारोपिता अपि भ्रमरोक्तयः संभवन्ति । विमृश्य । कुतो वा भ्रमरसंभावना ।

for ततश्च &c. G. इदमाह च भगवानिन्दु°. D. °चूडः for मौलिः. A. C. D. E. G. om. च after आकर्ण्य. C. D. E. F. G. om. बलि ... सुरः. D. चतुर्मुखम् for तत्कार्मुकम्. A. समायातः for आगतः. C. E. इह समागतः । अहमिहागतः. D. G. स तत आगतः ( G. तत्र गतः ) । अहमिहागतः; F. इह समागत. । अहमपीहागतः for मिथिलामागतः. G. adds कुतः पुनस्त्वमिह. A. मुनिः and the rest वात्स्यायनः before किमाह &c. B. अद्य for अथ. A. B. om. च. F. om. अथ च, B. C. E. F. मया तत्र. C F. लङ्केश्वरस्य. A. इदम् after गर्जितम्. C. D. E. F. G. नन्दनवनस्य. A. वर्त्तीति. G. लून. A. om. इति. D. om. इदम्. G. कुतूहलित. B. om. विमान. B. आकर्ण्यैव तमेव. D. om. च. B. इति after °करोमि. For the whole passage from. ततः up to प्रचलितो निशाचरः. A. has मुनिः । किमूचुस्ते । कथं रे अविदित ते । अद्य शाम्भवचापारोपणपणितजनकसुतास्वयंवरावलोकनमानविमण्डनाय सुराणां महान्कुसुमोपयोग इति । मुनिः । किमाह

यतः मकरन्दरसस्यन्दसुन्दरोद्गारधारिणौ ।
श्रवणानन्दिनावेतौ बन्दिनाविव राजतः ॥ २६ ॥

40 नेपथ्ये । साधु भगवन्विज्ञातम् । बन्दिनावेव खल्वावाम् नानादिगन्तसमागतनृपतिचक्रवर्णनाय जनकेन समादिष्टौ ।

41 दाल्भ्यायनः। अहो घुणाक्षरन्यायः । यदिदं भ्रमरद्वयं प्रति मयोक्तं बन्दिद्वये फलितं वचः । भवतु । तमिमं भ्रमरवृत्तान्तमस्मद्गुरवे निवेदयामि । इति निष्क्रान्तः ।

विष्कम्भकः ।

ततः प्रविशति बन्दिद्वयम् ।

42 एकः । वअस्स मञ्जीरअ पेक्ख पेक्ख गइन्ददसणसिणिद्धसलाआसहस्सणिम्मिदेसु मञ्चएसु आसीणा इमे कुङ्कमकिदअङ्गरा-

---

42 वयस्य मञ्जीरक प्रेक्षस्व प्रेक्षस्व । गजेन्द्रदशनस्निग्धशलाकासहस्रनिर्मितेषु मञ्चकेष्वासीना इमे कुङ्कमकृताङ्गरागा राजानोऽमलस्फटिकप्रासादशिखरासङ्गिनः कनकसिंहा इव राजन्ते । अमुग्धदुग्धसागरशिखरावलम्बिनोऽभिनवोद्गच्छन्निशाकरबिम्बप्रतिबिम्बा इव शोभन्ते ।

---

राक्षसः । तदिमं वृत्तान्तं स्वामिनः श्रुतिगोचरं करोमीति प्रचलितो निशाचरः । मुनिः । किमाह मधुप्रियः. A. om. महान्. G. om. अयम्. A. यतः for यद्दयम्. A. कर्णभुवि. B. कर्णभुवम्. D. G. कर्णान्तिकम्. C. D. E. G. add अपि before विश्रान्तः. C. D. E. F. add इति after °वृत्तान्तः. A. B. अलीक for अति. D. भ्रमरोद्गीतयः. A. om. विमृश्य... वना. B. भ्रम for भ्रमर. B. G. om. यतः. B. °नन्दनौ for °नन्दिनौ. A. राजतुः.

40. A. भगवन् साधु. A. B. add सत्यम् before बन्दिनौ. D. om. खलु

41. G. °द्वय प्रति for °द्वये. A. om. भवतु. G. तत् for तम्. B. om. तमिमम्. F. om. भ्रमर before वृत्तान्त. G. adds इति & E. शुद्ध before विष्कम्भकः.

42. A. om. इमे. A. B. D. G. कुङ्कमकअङ्ग.° C. कुङ्कमकिअअङ्ग. A. अङ्गराइणो & om. राआणो. D. om. पासाअ. C. E F. पासाण, & अवलम्बिणो for आसङ्गिणो. B. G. रेहन्ति; C. रेजन्ति & F. रेज्जन्ति for राअन्दि which A. D. omit. C. D. E. F. आहिणिग्गमन्त.

आ राआणो अमलफडिअपासादसिहरासङ्गिणो कणअसिहा विअ राअन्दि । अमुद्धदुद्धसाअरलहरीसिहरावलम्बिणो अभिणवुग्गमन्तणिसाअरबिम्बप्पडिबिम्बा विअ सोहन्दि ।

43 मञ्जीरकः । सखे नूपुरक पश्य पश्य ।

स्वां स्वां दिशं श्रितवता निवहेन राज्ञां
मञ्चावलीवलयमाकलितं विभाति ।
सीतास्वयंवरविलोकनकौतुकेन
पुञ्जीकृताकृति दिशामिव चक्रवालम् ॥ २७ ॥

अपि च ।

नटति नरपराग्रण्यग्रसूत्राग्रलग्ना
द्विपदशनशलाका मञ्चपाञ्चालिकेयम् ।
त्रिपुरमथनचापारोपणोत्कण्ठितानामतिरभसवतीव क्ष्माभृतां चित्तवृत्तिः ॥ २८ ॥

44 नूपुरकः । वअस्स मञ्जीरअ को इमो सीदाकरग्गहवासणावसन्तलच्छीविअसन्तपुलअमुउलजालमण्डिदं णिअभुअसहआरसाहिजुअलं विलोअन्तो चिट्ठदि ।

45 मञ्जी० । स एष निजयशःपरिमलप्रमोदितचारणचञ्चरीकचयकोलाहलमुखरितदिक्चक्रवालः क्ष्मापालः कुन्तलालङ्कारो मल्लिकापीडो नाम ।

---

44 वयस्य मञ्जीरक कोऽयं सीताकरग्रहवासनावसन्तलक्ष्मीविकसत्पुलकमुकुलजालमण्डितं निजभुजसहकारशाखियुगलं विलोकयंस्तिष्ठति ।

---

43. A. B. अये for सखे. A. om. one पश्य. G. श्रितवताम्. A. नट for नर. B. D. G. °लग्न.° B. पञ्चालिका. A. B. क्ष्माभुजाम्.

44. A. B. add सहर्षम् & om. मञ्जीरअ. B. °ग्गहण. C. D. E. F. G. विलसन्त. D. मण्डल for मुउल. A. मण्डिद.° A. वट्टदि.

45. D. om. स. C. adds चारण

46 नूपु० । इमो उण को । जो किल दूरावसारिअकणअकडअप्पअडिअधणुग्गुणकिणकिसअलेहामण्डणे भुअदण्डे पुलोवन्तो चिट्ठदि ।

47 मञ्जी० । सोऽयं कुबेरदिगङ्गनाललाटतटविलासलम्पटः काश्मीरतिलकः कर्पूरतिलको नाम ।

48 नूपु० । इमो उण को णिअप्पदावदिणअरुग्गमपुव्वगिरिसिहरसहअरं दक्खिणभुअदण्डंउण्णामिअ वट्टदि ।

49 मञ्जी० । स एष निजप्रतापप्रभापटलपिञ्जरितमलयाचलनितम्बतटः काञ्चीमण्डनो वीरमाणिक्यनामा नृपतिः ।

50 नूपु० । को इमो हरसुल्लसन्तपुलअजालविसंठुलकपोलत्थलचालिदकुण्डलसरिसनिवेसणावदेसेण पअडिअहरसरासणकण्णऊरमणोरहो राअदि ।

---

46 अयं पुनः को यः किल दूरावसारितकनककटकप्रकटितधनुर्गुणकिणकषणलेखामण्डने भुजदण्डे विलोकयंस्तिष्ठति ।

48 अयं पुनः कः । निजप्रतापदिनकरोद्गमपूर्वगिरिशिखरसहचरं दक्षिणभुजदण्डमुन्नमय्य वर्तते ।

50 कोऽयं हर्षोल्लसत्पुलकजालविसंष्ठुलकपोलस्थलचालितकुण्डलसदृशनिवेशनापदेशेन प्रकटितहरशरासनकर्णपूरमनोरथो राजते ।

---

before निज. D. भा for प्र. G. °वाल° C. E. F. G. °पाल.° C. E. F. कुल for कुन्तल.

46. B. C. E. F G. कइमो for को. A. adds एसो & om. जो किल. A. दूरोत्थि° & B. दूरतरअव.° G. om. कणअ A. पडिबद्ध & D पभासिअ for प्पअडिअ. A. C. °मण्डणो & G. °मण्डले. A.° भुअदण्डो. A. पेक्खन्तो & B. पच्छरितो. A. वट्टदि.

47. B. E F. add प्रतापप्रभापटलपिञ्जरितदिङ्मुखः after अयम्. A. B. D. G. om. कर्पू...नाम.

48. A. B. प्पहाव & D. प्पणोव (?) for प्पदाव. D. सहअर°. B. C. E F. णिअ for दक्खिण.

49. D. पञ्जरित. A. तट°. G. वार for वीर.

50. C. E. F. add उणो after को. B. C. D. E F. रह° for हर°. A. हरसमु°. A. D G. om. जाल. D. चलइ & G. चल. D. सरस. B. सरिस. B. C. D. E. °मणोहरो.

51 मञ्जी० । सोऽयमसमसमरमहार्णवैकमकरो मत्स्यराजः ।

52 नूपु० । इमो उण को अमलमलअजरसधवालिअणिअभुअदण्ड-विडम्बिअभुअङ्गराअसिरी सिरीसकुसुमसुउमारं माररिउसरासणं कलअन्तो विप्फुरादि ।

53 मञ्जी० । स एष विमलमुक्तावलीविराजमानवक्षस्तटस्तुङ्गभुजतरङ्गः सिन्धुराजः । तदलमनेन । प्रस्तुतं तावदुपक्रमावहे । परिक्रम्योच्चैः। अहो राजान आकर्णयत

आकर्णान्तं त्रिपुरमथनोद्दण्डकोदण्डनद्धां
मौर्वीमुर्वीवलयतिलकः कोऽपि यः कर्षतीह ।
तस्यायान्ती परिसरभुवं राजपुत्री भवित्री
कूजत्काञ्चीमुखरजघना श्रोत्रनेत्रोत्सवाय ॥ २९ ॥

पुनः सकौतुकम् । सखे दृश्यन्ताममी

कामारिकार्मुकविकर्षणकौतुकोर्मि-
रोमाञ्चिताद्विगुणपीवरबाहुदण्डाः ।
सीताकरग्रहमिलत्कुतुकातिमात्र-
विस्तार्यमाणहृदयाः परितो नरेन्द्राः ॥ ३० ॥

---

52 अयं पुनः कोऽमलमलयजरसधवलितनिजभुजदण्डविडम्बितभुजङ्गराजश्रीः शिरीषकुसुमसुकुमारं माररिपुशरासनं कलयन्विस्फुरति ।

---

51. G. रण for समर. A. omits this speech.

52. G. om. णिअ. B. adds भोअ before सिरी. C. E. F. भोअ for सिरी. D. om. कुसुम. C.E.F °सुउमा· रोकाम°. D. पुरोअतो (?) for कलअन्तो. A. omits this speech also.

53. G. तट°. A. B. तुङ्गतर. G. भुजङ्गतरङ्ग. D. G. प्रकृतम्. D. उपाक्र°. C. D. E. F. G. °महे for °वहे. A. आकर्णयन्तु. G. adds one more आकर्णयत. A. B. D. F. दृश्यताम् & G. पश्यताम्. B. D G. विस्तीर्य°. G. adds अये before कथम्. B. °समयम्. A तट for तल.

पुनः सहर्षम् । कथमुच्चालितमेव समसमयसञ्चरणमिलत्कपोलतलसंघट्टमसृणरणन्मणिकुण्डलेन राजमण्डलेन ।

54 नूपु० । पुलोवेहि पुलोवेहि । इमाणं अण्णोण्णसंघट्टन्तकेऊरसमुच्चलन्तकणअकणमिसेण प्पआवाग्गिणो विप्फुलिङ्गा विअ दीसन्ति ।

55 मञ्जी० । विहस्य । सखे

पश्य पश्य सुभटैः स्फुटमावं
भक्तिरेव गमिता न तु शक्तिः ।
अञ्जलिर्विरचितो न तु मुष्टि-
र्मौलिरेव नमितो न तु चापः ॥ ३१ ॥

56 नूपु० । कहं आरम्भरमणिज्जो इमाणं संरम्भो ।

57 मञ्जी० । सविषादम् ।

आद्वीपात्परतोऽप्यमी नृपतयः सर्वे समभ्यागताः
कन्येयं कलधौतकोमलरुचिः कीर्तिश्च लाभः परः ।
नाकृष्टं न च टङ्कृतं न नमितं स्थानाच्च न त्याजितं
केनापीदमहो धनुः किमधुना निर्वीरमुर्वीतलम् ॥ ३२ ॥

---

54 विलोकय विलोकय । एषामन्योन्यसंघट्टमानकेयूरसमुच्चलत्कनककणमिषेण प्रतापाग्नेर्विस्फुलिङ्गा इव दृश्यन्ते ।

56 कथमारम्भरमणीय एषां संरम्भः ।

---

54. B. पेक्खव पेक्खव, & समुल्लसन्त. A. कङ्कण for कण. B. प्पभाव & D. वडवा for प्पआव. F. प्फुलिङ्गा :. C. D. E. सन्ति.

55. D. G. om. सखे.

56. D. कमा (?) रम्भणीओ. D. G. जेव्व before इमाणं.

57. D. सु for च. All except B. have लाभास्पदम्. F. कष्टं केन न for नाकृष्टं न च. G. टात् for टम्. D. E. टङ्कितम्. A. B. नाच्चालितम् for न त्याजितम्. A. D. महद्धनुरिदम् for धनु...धुना.

58 नेपथ्ये । आः कोऽयमलीकवैतालिको धनुर्मात्रकेऽपि नमयितव्ये निर्वीरमुर्वीतलं व्यपदिशति ।

59 नूपु० । वअस्स कस्स इमो महीअलचलन्तराहुरथचक्करवकक्कसे कण्ठधुणी सुणीअदि ।

60 मञ्जी० । ममाप्ययमपरिचितः । तदेनं पृच्छामि तावत् । परिक्रम्य अये कः खलु भवान्यः सकलदेशदर्शिनो ममापि न विज्ञातः ।

61 प्रविश्य पुरुषः । साटोपं परिक्रम्य सक्रोधम् । आः पाप वैतालिकापसद कतिपयग्रामटिकापर्यटनदुर्विदग्ध कथं मामपि दश । इत्यर्धोक्ते स्वगतम् । कथं संवरणीयमेव विवरितुमुपक्रान्तोऽस्मि । भवतु इदमेव तावन्निर्वाहयामि । प्रकाशम् । कथं मामपि दशदिग्विलासिनीकर्णपूरीकृतकीर्तिपल्लवं त्रिभुवनवीरनामधेयं कूपमण्डूक इव सागरमविज्ञातमपदिशसि । तत्कथय तावत्कुत्र तत्कर्णान्तनिवेशनीयगुणं कन्यारत्नं कार्मुकं च ।

62 मञ्जी० । इदं तावत्कार्मुकम् । कन्या तु चरमं लोचनपथमवतरिष्यति ।

---

59 वयस्य कस्यायं महीतलचलद्राहुरथचक्ररवकर्कशः कण्ठध्वनिः श्रूयते ।

---

58. A. B. om. अपि. G. उपदिशति.

59. C. E. om. कस्य. D. om. रव. C. E. F. सह्रो.

60. C. E. G. मया for मम. B. तेनेमम् for तदेनम्. A. om. तावत्. D. G. अहो for अये. E. places अपि before मम. B. अविज्ञातः. D. अविख्यातः & G. न विख्यातः.

61. A. सक्रोधम् for साटोपम्. B. कोऽयमलीक° for पाप; °सदः. A. °पर्यटन. B. D. दुर्विदग्धः. A. B. रे after कथम्. B. अर्धोक्ते. C. D. E. F. G. om. एव. E. अपक्रान्तः. D. G. om. प्रकाशम्. B. कथ रे. A. B. सागरमिव. A. B. D. G. अविख्यातम्. A. उपदिशसि. C. D. E. G. insert क before तावत्. C. D. E. F. G. om. कुत्र तत्. B. C. E. F. अन्तिक for अन्त. C. E. निगमनयि; F. शमनीय, & G. निशमय for निवेशनीय.

62. A. D. कन्यारत्नम्. B. °तरिष्यते.

63 पुरुषः । ससंरम्भम् । धिङ्मूर्ख कथं राशिनक्षत्रपाठकानां गोष्ठीं न दृष्टवानासि । तेऽपि कन्यामेव प्रथमं प्रकटयन्ति चरमं धनुः ।

64 मञ्जी० । स्वगतम् । कथमयं वाचाटतां प्रकटयति । भवतु । अनयैव तावदेनं निवारयामि । प्रकाशम् । अये एतावति वीरमण्डले भवानेव न क्षत्रविद्याकुशलः ।

65 पुरुषः । सक्रोधम् । आः कथं रे अहमेव क्षत्रविद्यायामकुशलः ।

66 मञ्जी० । तत्कथं कार्मुकमन्तरेणैव कन्याविलोकनायोत्कण्ठसे ।

67 पुरुषः । साटोपं परिक्रम्य । कथं ममापि चापारोपणे संशयः ।

68 मञ्जी० । अथ किम् ।

69 पुरुषः । तदेष ममाभिसंभाव्यते यदि

विनैवाम्भोवाहं बहलरुचिलिप्ताम्बरतला
तडिल्लेखा हेमद्युतिविततिरम्या विलसति ।

यदि वा

विनैव स्वर्गङ्गां नभसि रभसोन्मुक्तशफरी-
परीवर्तैः साकं स्फुरति नवनीलोत्पलवनम् ॥ ३३ ॥

---

63. A. om. रे राशि°. A. B. अपि after पाठकानाम्. B. F. गोष्ठीः. D. आदृतवान्. A. B. हि for अपि which F. om. B. रे before कन्या. A. B. प्रकाशयन्ति. A. B. एव before धनुः.

64. B. अथ for अयम्. वाचालताम्. प्रथयति. A. om. एनम्. A. F. om. अये. B. एक before एव.

65. A. om. सक्रोधम्. D. नक्षत्रविद्यायामेव कुशलः for अहम्... कुशलः.

66. B. adds आरोपण & D. विलोकन after कार्मुक.

67. A. सक्रोधम् before साटोपम्.

68. A. एवमेव after किम्.

69. A. C. E. F. G. तदेष. D. तदेव. B. ममापि संशयः. All except G. have अपि for अभि. E. F. यादिह. F. G. °तलात्. A. om. यदि वा. F. च for वा. B. पृषत for रभस. All except F. have उन्मुग्ध.

विलोक्य सविस्मयम् । कथमस्मत्प्रतिज्ञाभङ्गाय विपरीतं सृष्टिनैपुण्यं प्रणीतवान्विधिः । नन्विदं तथैव पश्यामि । विमृश्य । अथवा क एष विधिरपि मद्विरोधाय ।

मयि क्षीरोदन्वन्निभृतमुराजिन्नाभिनलिनीं
निजक्रीडावापीजलकमलिनीं कर्तुमनसि ।
पदभ्रंशाशङ्की मधुरमधुरालापचतुरै-
श्चतुर्भिः स्वैर्वक्त्रैरनुनयपरोऽभूदयमपि ॥ ३४ ॥

पुनर्निपुणं निरूप्य । अये सादृश्यात्प्रतारितोऽस्मि ।

तडिल्लेखा नेयं विलसति परं सौधशिखरे
वसन्त्याः कस्याश्चित्कनकरुचिरा गात्रलतिका ।
अपीदं नोन्मीलत्कुवलयवनं मीनतरलं
परं तस्या एव स्फुरति नयनालोकललितम् ॥ ३५ ॥

विभाव्य । नूनं तदेतत्सीताभिधानं कन्यारत्नम् । पुनः सहर्षम् ।

राजीव जीवसि मुधा न सुधाकरत्व-
मस्याः समः पदनखस्य कुतो मुखस्य ।
अग्रे दृशोर्मृगदृशः कतमः कुरङ्ग-
स्तत्खञ्जन त्वमपि किं जनरञ्जनाय ॥ ३६ ॥

पुनः सरभसम् ।

कदली कदली करभः करभः
करिराजकरः करिराजकरः ।

---

G. सविषादम्. B. विपरीत°. D. G. नैपुणम्. B. विनीतवान्. A. B. विधिरपि क एष. D. सादृश्य°. G. सादृश्येन. C. D. E. F. G. उन्मज्जत्. D. लसितम् for ललितम्. G. एव for एतत्. A. B. F. कतर:. A. तरङ्ग for कुरङ्गः. A. om. पुनः before सरभसम्. A. बिभर्तु.

भुवनत्रितयेऽपि बिभर्ति तुला-
मिदमूरुयुगं न चमूरुदृशः ॥ ३७ ॥

70 मञ्जी० । सखे नूपुरक किमेतत्कस्याश्चिदपि हस्तादादाय सानन्दमालोकयत्यन्तःपुरिको जनः ।

71 नूपु० । अहमीरिसं संभावेमि । जं किर गुरुभवणादो आअदाए चन्दणिआए समप्पिदं चित्तपडं पुलोवेदीति ।

72 मञ्जी० । तत्किं स त्वया दृष्टश्चित्रपटः ।

73 नूपु० । अध इम् ।

74 मञ्जी० । तत्कथय किं तत्र लिखितम् ।

75 नूपु० । भट्टदारिआ अण्णच्च कोवि णीलुप्पलदामसामलओ कुसुमसरसरिसरूओ कुण्डलीकिदहरचावो चक्कवट्टिकुमारो ।

76 मञ्जी० । अहह मुग्धः खल्वबलाजनः । यदेवमपि कठोरप्रतिज्ञे राजनि किशोरवयसं जामातरमाशंसति । सखे जानासि केन लिखितं चित्रमिति ।

---

71 अहमीदृशं संभावयामि । यत्किल गुरुभवनादागतया चन्दनिकया समर्पितं चित्रपटं विलोकयतीति ।

73 अथ किम् ।

75 भर्तृदारिका अन्यश्च कोऽपि नलिनोत्पलदामश्यामलः कुसुमशरसदृशरूपः कुण्डलीकृतहरचापश्चक्रवर्तिकुमारः ।

---

70. B. om. सखे & has अन्तःपुरिकाजनः. A. omits this speech.

71. A. B. परि in place of ईरिस. D. आआणाए (?) for आअदाए. A. B. E. om. त्ति at the end.

72. C. D. E. F. G. om. तत्किम्.

73. & 74. G. om. these speeches.

75. D. भट्टारिआ. All except F. have दाव before अण्णच्च. B. C. E. F. सउमालो for सामलओ. A. रुचिओ for रूओ.

76. F. अहो for अहह. E. राज्ञि. A. B. अपि before जानासि.

77 नूपु ०। जाणामि। महेसिणो जण्णवक्कस्स दुदिअधम्मआरिणीए।

78 मञ्जी ०। सहर्षम्। इदानीमुद्भिन्नो मम मनोरथाङ्कुरः। देवी हि मैत्रेयी सिद्धयोगिनी कालत्रयदर्शिनी नालीकमालिखति।

79 नूपु ०। सव्वं सम्भावीआदि जइ इमो जरठङ्गो इदो अवसरादि।

80 मञ्जी ०। आः कोऽयम्। एनमपसारयामि। उच्चैः। अये किमितस्ततो विलोकयसे। नन्विदं शाम्भवं धनुः। तदिहैव दीयतां दृष्टिः।

81 पुरुषः। आः किमुच्यते दृष्टिरिति। नन्वयं मुष्टिरपि दीयते। परिक्रम्य शेखरभ्रंशमभिनीय सविषादं विलोकयति।

82 मञ्जी ०।

अयेऽलङ्क्षेशविस्रस्तशेखरालोकनेन ते।
समयो याति तत्तूर्णं गृहाण हरकार्मुकम्॥ ३८॥

83 पुरुषः। आत्मगतम्। कथमनेन विदितोऽस्मि। विमृश्य। अथवा घुणाक्षरन्यायागतं शब्दसादृश्यमेतत्। प्रकाशं ससंरम्भम्।

---

77 जानामि। महर्षेर्याज्ञवल्क्यस्य द्वितीयधर्मचारिण्या।
79 सर्वं संभाव्यते यद्ययं जरठाङ्ग इतोऽपसरति।

---

77. A. दुहिदाए. G. दुहिअए.
78. A. om. सहर्षम्. G. सा before नालीक &c.
79. B. C. जठर for जरठ. A. अवसरिस्सादि.
80. A. places अहम् & C. D. E. F. G. किमिदम् before एनम्. C. D. E. F. G. om. उच्चैः. D. ततमालोकसे. C. अव for वि. A. E. F. विलोकसे. D. om. धनुः. A. इति at the end.
81. A. B. om. आः ... इति. A. G. इयम् for अयम्. C. E. om. दीयते. A. B. विलोकयते.
82. C. अवलोक°. B. किम् fo ते.
83. A. B. D. G. स्वगतम्. D. न्यायेन & G. गत for आगत. Dr °गत.° B. अक्षर for शब्द. A. मात्र

सावहेलकमनीयमुदस्य
क्रीडयैव विनिबध्य च मौर्वीम् ।
कृष्टमेव हरकार्मुकमेत-
द्दृश्यतामसुहृदां हृदयं च ॥ ३९ ॥

धनुषि हस्तमर्पयित्वा स्वगतम्। कथं न चलत्यपि। भवतु। प्रकाशम्। अये धनुरिति वक्रः पन्थाः। तत्सरलेनैव करवालधारापथेन सीतामानयामि।

84 मञ्जी०। कथमतिप्रगल्भसे। न विलोकयसि किम्।

रोषारुणीकृतविलोचनकान्तिभिन्न-
भ्रूभङ्गभीमघटितभ्रुकुटीविटङ्कम् ।
उत्खातलोलकरवाललताकराल-
दोर्दण्डचण्डचरितं नरवीरचक्रम् ॥ ४० ॥

85 पुरुषः। कृपाणमुद्यम्य परितो विलोक्य। पश्यत।

निर्भिन्नवैरिकरिकुम्भतटीविमुक्त-
मुक्ताफलप्रकरताराकिताम्बरश्रीः ।
यः कालरात्रिरिव भाति रणे स एष
रे रे नृपा मम कृपाकृपणः कृपाणः ॥ ४१ ॥

आकाशे कर्णं दत्त्वा। किं ब्रूथ।

एकः कथं बहुतरैः सुभटैः करोमि
संग्रामडम्बरमिति त्यज रे विषादम् ।

---

for सादृश्य. G. °लेप for °हेल. D. G. दृश्यमत्रसदृशो हृदयं च. A. B. एष after वक्रः. G. om. एव after सरलेन.

84. A. om. न ... किम् G. om. किम्. A. °कम्प for °खात & नृप for नर. F. reads the first two lines as the last two.

85. D. G. have पश्यत twice. A. करे for रणे & repeats किं ब्रूथ & has सुभट for सुलभ. F. विधेहि & समरे सहैव. A. adds पुरुषः before

यं मन्यसे सुलभमत्र सहैव तेन
चेतो निधेहि समरे समरेखयैव ॥ ४२ ॥

अहो धृष्टता मनुष्यकीटकानाम् । तदेतान्निजमूर्त्यैव तावद्भीषयामि । इति साटोपं निष्क्रान्तः ।

86 नेपथ्ये ।

मन्दाकिनीकनकपद्मबिसाङ्कुराणां
किञ्चोग्रदिग्गजलसद्दशनाङ्कुराणाम् ।
उन्मूलनैरलमनीयत शैशवं यै-
स्तेऽमी निजा मम भुजाः प्रकटीभवन्तु ॥ ४३ ॥

ततः प्रविशति निजरूपेण दशकण्ठः ।

87 नूपु० । वअस्स पेक्ख पेक्ख कोदूहलं जं एक्कस्सवि माणुसस्स दस मत्थआइं ।

88 मञ्जी० । नैष मानुषः । राक्षसराजः खल्वसौ दशकण्ठः ।

89 नूपु० । ता परित्ताअदु मं वअस्सो । णं रक्खसमेत्तो जेव्व सम्मुहपडिदं माणुसं चव्वेइ । किं उण रक्खसराओ ।

90 मञ्जी० । अलं कातरतया । सकलवीरवृन्दवन्दनीया हि बन्दिजातिः । तत्कथमस्मद्विधेषु सकलभुवनैकवीरो विपरीतं वर्तिष्यते दशकण्ठः ।

---

87 वयस्य प्रेक्षस्व प्रेक्षस्व कौतूहलं यदेकस्यापि मानुषस्य दश मस्तकानि ।
89 तत्परित्रायतां मां वयस्यः । ननु राक्षसमात्र एव संमुखपतितं मानुषं चर्वति । किं पुना राक्षसराजः ।

---

अहो. A. B. E. F. G. कीटानाम्. C. D. E. F. om. तावत्. C. D. G om. इति before साटोपम्.

86. A. उन्मीलन. D. च सम् for अलम्. A. °भवन्ति. B. दशकन्धर.

87. C. om. one पेक्ख. D. om. जं.

88. A. B. सखे before नैष &c. B. किन्तु before राक्षस °.

89 A. om. ता. F. repeats परित्ताअदु. A. B. om. णं. A. ण माणअदि for चव्वेइ.

90. D. om. हि. C. E. F. °विधे.

91 नूपु०। सहर्षम्। जदि ईरिसं ता किंपि इमं णीसङ्को भविअ पुच्छिस्सम्। उपसृत्य। अए किंति एत्तिआइं मत्थआइं उव्वहीअन्दि। किंति वा एक्कं रक्खिअ अवराइं जत्त कुत्तवि ण णिक्खिप्पयन्ति।

92 रावणः। आः पाप कथमस्थाने शिरश्छेदवार्तयामङ्गलमावेदयसि। तदेष केवलं वैतालिक इत्युपेक्ष्यः।

93 मञ्जी०। स्थाने शिरश्छेदवार्ताऽपि भवतो मङ्गलाय।

94 रावणः। अथ किम्। ननु रे

विद्याधरप्रणयिनीकरपल्लवाग्र-
लीलाविमुक्तकुसुमप्रकरावकीर्णे।
श्रीचन्द्रचूडचरणे च रणे च कामं
छिन्नोऽपि मस्तकगणो मम मङ्गलाय॥ ४४॥

95 नूपु०। जदि ईरिसो तुमं ता किंति णिअरूअं गोविअ चोरो विअ पविट्ठोसि।

---

91 यदीदृशं तत्किमपीमं निःशङ्को भूत्वा प्रक्ष्यामि। अये किमित्येतावन्ति मस्तकान्युदुह्यन्ते। किमिति वैकं रक्षित्वापराणि यत्र कुत्रापि न निक्षिप्यन्ते।

95 यदीदृशस्त्वं तत्किमिति निजरूपं गोपयित्वा चोर इव प्रविष्टोऽसि।

---

91. A एरिसो. D. om. इमम्. A. B. D. G. om. भविअ. A. om. उपसृत्य। अए. A. B. इअन्ति. C. E. उहच्छहीअन्दि. A. दुआन्ति. B. उव्वहीअदि. C.D.E.F.G. add उण before अवराइं. D. अत्त for जत्त. A. उण for वि ण. D. पा (?) for ण. A. णिक्खिअति. C. णिक्खिवप्पअति. D. णिक्षिपन्ति. E. णिक्खिवसि.

92. D. शैलूषाधम for पाप & अस्मिन्स्थाने. A. अस्मत् for अस्थाने. B. मे after आवेदयसि. G. om. केवलम्. A. B. उपेक्ष्यसे. C. उपेक्ष्यम्.

93. A. om. अपि.

94. D. वरणे for च रणे. A. निकामम्.

95. A. om. त्ति. A. G सङ्कोविअ. E. गोविइत्ता उण before चोरो.

96 रावणः । धिङ् मूर्ख न जानासि रे

ये चन्द्रचूडाचलचालनैक-
चातुर्यचिन्तामणयो भुजा मे ।
तैरेव भूयिष्ठतरैः प्रविष्ट-
श्चापाधिरोपाय कथं न लज्जे ॥ ४५ ॥

तत्कथय कुत्र जानकीति ।

97 मञ्जी० । अपवार्य सविषादम् ।

यस्याः स्वयं कुलगुरुः किल याज्ञवल्क्य-
स्तातः स एष जनको जननी धरित्री ।
साऽपि त्वमद्य बत दुर्विधिवैशसेन
वत्से निशाचरकराङ्कगता भवित्री ॥ ४६ ॥

98 नूपु० । अपवार्य । अलं संतावेण । कहं एत्तिअमेत्तम्मि वीरमण्डले कोवि णात्थि जो इमस्स हठप्पउत्तस्स पुरदो होदि ।

99 मञ्जी० । निःश्वस्य । को नाम कुपितस्य दशकण्ठस्य संमुखो भवति क्षत्रिय ऋते सहस्रबाहोः कार्तवीर्यात् ।

---

98 अलं संतापेन । कथमेतावन्मात्रे वीरमण्डले कोऽपि नास्ति योऽस्य हठप्रवृत्तस्य पुरतो भवति ।

---

96. A. om. रे. A. B. D. G. प्रवृत्त for प्रविष्ट. B. om. इति after जानकी.

97. A. D. G. om. अपवार्य. D. बहु for बत; & दुर्विध. G. शैशवेन.

98. A. om. अपवार्य. B. C. E. F. G. तावेण. A. इयदि समेताम्मि. B. इयदि. E. एत्तिआति एतास्सि. A. B. C. E. F. insert सो before को. A. B. अणत्थ for हठ. A. B. सम्मुहो. E. हविस्सदि.

99. A. विहस्य for निःश्वस्य, which C. E. F. G. om. C. D. E. F. G. om. को नाम. C. D. E. G. insert कः before संमुख. C. D. E. F. G. समुखे. B. क्षत्रियात्.

100 नूपु० । सहर्षम् । जीविदम्हि । पेक्ख पेक्ख । णं संपत्तो सहस्सबाहू किदवीरपुत्तो ।

101 मञ्जी० । धिङ् मूर्ख जामदग्न्यकुठारधाराजलनिमग्नः क्व संप्रति कार्तवीर्यः । तन्नूनमयं बाणासुरो भविष्यति । हन्त भोस्तादिद-मनर्थान्तरम् । विमृश्य । अथवा विषस्य विषमौषधं भविष्यति ।

102 ततः प्रविशति बाणासुरः । परिक्रम्य साटोपम् ।

कैलासशैलशिखरादपि भूरिभारं
निःसीमसारमधुना धनुरिन्दुमौलेः ।
आलम्ब्य पुष्पसदृशं करपल्लवेन
स्फीतं भुजद्रुमवनं सफलीकरोमि ॥ ४७ ॥

103 रावणः । अनालोकितकेन । कथमद्यापि नानीयते जानकी ।

104 बाणः । विलोक्य स्वगतम् । कथमिह दशकण्ठोऽपि । प्रकाशम् । अहो-ऽएतावति वीरलोके न केनापि तावदारोपितमैश्वरं धनुः ।

105 मञ्जी० । नारोपणीयं च ।

---

100 जीवितोऽस्मि । प्रेक्षस्व प्रेक्षस्व । ननु संप्राप्तः सहस्रबाहुः कृतवीर्यपुत्रः ।

---

100. C. om. सहर्षम्. A. repeats जीविदम्हि. G. om. one पेक्ख. C. E. om. णं & G. ण. A. D. पउत्तो, B. पत्तो, C. E. संवत्तो, & G. पत्तो for संपत्तो.

101. A. B. °जले. D. om. जल. A. अवश्यम् for अयम्. B. भवति.

102. F. °सुरोऽसुरः A. D. G. सार for भार. A. G. भार for सार. G. सफलम्.

103. F. अनालोकितेन. G. अनाक-र्णितकेन. A. एव after °केन. B. आः before कथम्. A. सीता.

104. C. E. F. आत्मगतम्. F. om. अपि. A. om. अहो.

105. G. नूपुरक for मञ्जरिक. D. om. च.

106 रावणः । अनाकर्णितकेन । कथमद्यापि नानीयते जानकी । तदयं चन्द्रहास एव मे बलादानेष्यति ।

107 बाणः । विहस्य । यदीदृशं वीरडम्बरं तत्किमारोप्यैव हरकार्मुकं नानीयते सीता ।

108 रावणः । आः कोऽयमलीकपण्डितः ।

उद्दण्डचण्डिमलसद्भुजदण्डखण्ड-
हेलाचलाचलहराचलचारुकीर्तेः ।
कीदृग्यशस्तुलितबालमृणालकाण्ड-
कोदण्डकर्षणकदर्थनयाऽनया मे ॥ ४८ ॥

109 बाणः । सोऽयमशक्तिप्रकारः ।

110 रावणः । आः कथंदशमुखस्याप्यशक्तिसंभावना ।

111 बाणः । विहस्य । अये बहुमुखता नाम बहुप्रलापितायाः कारणम् । विक्रमस्य तु बहुबाहुतैव ।

112 रावणः । आः कथं रे पलालजालनिःसारेण भुजभारेण वीरंमन्योऽसि ।

113 बाणः । सक्रोधम् । अये समरकलाकुण्ठ दशकण्ठ कथं ममापि भुजभारं निःसारं व्यपदिशसि । न जानासि किं यतोऽत्रैव

---

106. G. om. अनाकर्णितकेन. All except A. read सीता. A. om. मे. C. E. F. मम. A. G. आनयति. D. om. 104 & 105.

107. C. E. F. इत्थम् for ईदृशम्. A. यदि तावदिदं श्रुतम् for यदीदृशम्. B. समारोप्य & जानकी.

108. C. E. विचालित & F. अवचालित for चलाच.

109. D. °प्रस्तारः.

111. F. om. विहस्य अये. D. °प्रलापिकायाः & विक्रम्य. C. D. E. F. G. om. तु.

112. B. om. आः. C. D. E. F. G. भार for जाल. D. om. भुजभारेण.

113. A. B. अरे for अये. A. D. G. om. कथम्. A. यत्र for अत्र.

पितुः पादाम्भोजप्रणतिरभसोत्सिक्तहृदयः
प्रयातः पातालं न कति कति वारानकरवम् ।
सहस्रे बाहूनां क्षितिवलयमासज्य सकलं
गलद्भारोद्वेलां फणफलकमालां फणिपतेः ॥ ४९ ॥

114 रावणः । अरे बलितनय चलितनयवृत्तिरसि । यदलीकविक्रमवर्णनया सत्यविक्रमस्य मे पुरत आत्मानं विडम्बयसि ।

115 बाणः । कथं त्वमेव सत्यविक्रमः ।

116 रावणः । अथ किम् ।

दोष्णां न मे विदितवानसि वीरलक्ष्मी-
प्रासादविभ्रमवतीं पदवीं गरिष्ठाम् ।
ये चन्द्रशेखरगिरौ करपल्लवाङ्क-
पर्यङ्कशायिनि दधुः कलशप्रतिष्ठाम् ॥ ५० ॥

117 बाणः । अलमलीकवाग्विग्रहेण । तदिदं धनुरावयोस्तारतम्यं निरूपयिष्यति ।

118 मञ्जी० । अये बाणरावणौ किमिदं नरवीरैकसमर्पणीयसीतापरिणयमनोरथेन विफलमायास्यते चेतःपदवी ।

---

C. E. F. पाताले. G. जगत् for गलत्. A. फणी for फण. F. फणक for फलक.

114. F. अये for अरे. G. om. बलितनय. D. F. नयन for नय. C. E. F. मम. A. om. मे. All except B. have स्वात्मानम्.

115. A. B. om. एव.

116. A. °विभ्रमवताम् & om. वीम् ...ये. A. B. अग्र for अङ्क. G. ° प्रतिष्ठान्.

117. A. D. om. वाग्. A. विस्तारेण A. B. add एव after धनुः & B. तावत् also.

118. A. °वीरौ कथं सम° & B. °वीरसम° D. विफलताम्.

119 बाणः । किमेतावता ।

त्रिपुरमथनचापारोपणोत्कण्ठिता धी-
र्मम न जनकपुत्रीपाणिपद्मग्रहाय ।
अपि तु बहलबाहुव्यूहनिर्व्यूहमाञ-
बलपरिणतिहेलाताण्डवाडम्बराय ॥ ९१ ॥

120 रावणः ।

उन्मूलितेन शिखरेण हराचलस्य
प्रागेव मे भुजबलस्य कृता परीक्षा ।
एषा विदेहतनयाकुचकुम्भकेलि-
कौतूहलाद्गिरिशकार्मुककर्मदीक्षा ॥ ९२ ॥

121 नेपथ्ये ।

असुरसुरनिशाचरोरगाणा-
मपि नरकिन्नरसिद्धचारणानाम् ।
नमयति यदि कोऽपि चापमेत-
न्मम दुहितुः स करग्रहं करोतु ॥ ९३ ॥

122 रावणः ।

रे रे भुजाः कुरुत चन्द्रकलाकिरीट-
कोदण्डकर्षणयशोधवलां त्रिलोकीम् ।
अङ्गीकुरुध्वमचिराच्च विदेहपुत्री-
वक्षोजचन्दनरजःपरिधूसरत्वम् ॥ ९४ ॥

धनुरालोक्य स्वगतम् । अये दुर्विगाहमिदम् । तदलमनेन । प्रकाशम् ।

---

119. A. बुद्धेः & B. बुद्धिः for °ता धीः. B. तु for न. A. B. D. F. G. परिमल for परिणति.

120. G. उन्मीलित. B. G. भुजबनस्य. F. नर्म for कर्म.

121. A. करोति. G. तनोतु.

122. C. E. F. आत्मगतम्. A. रे B. अरे for अये which G. om. A. B. add इदम् after तावत् & read धनुरमे.

अये बाण त्वमेव तावदग्रे धनुरारोपय । अस्माकमपि नूतनागतत्वेन मान्योऽसि ।

123 बाणः । तथाऽस्तु । इति परिक्रामति ।

124 रावणः । स्वगतम् । अये हृदय अलं कातरतया । अयं तावत्कतरः कुण्ठीकृतदशकण्ठे शितिकण्ठकार्मुके ।

अन्योऽपि कोऽपि यदि चापमिदं विकृष्य
सीताकरग्रहविधिं विदधीत धीरः ।
लङ्कां नयामि च गिरानुनयामि चैनां
द्रागानयामि च वशे जनकेन्द्रपुत्रीम् ॥ ९५ ॥

125 मञ्जी० । सखे पश्य पश्य ।

बाणस्य बाहुशिखरैः परिपीड्यमानं
नेदं धनुश्चलति किंचिदपीन्दुमौलेः ।
कामातुरस्य वचसामिव संविधानै-
रभ्यर्थितं प्रकृतिचारु मनः सतीनाम् ॥ ९६ ॥

126 रावणः । सविषादमात्मगतम् । कथमियं सीतानुनयप्रत्यूहपिशुनेव दुरुपश्रुतिः । प्रकाशम् । अये बाण अपि नाम ते पललजालनिःसारो भुजभारः ।

127 बाणः । कथं भुजमण्डलमिदमालोकयन्नपि कटुभाषितां न मुञ्चसि ।

---

123. D. परिक्रमाति.

124. C. E. F. आत्मगतम्. G. अरे for अये. F. repeats अलं कातरतया. D. कातरः. B. कुण्ठित. A. अतिकठोर & B हर for शितिकण्ठ. A. D. G. इमम् for इदम्. A. विदधेत & F. विदधाति. A. B. C. E. F. वीर for धीर. D. एताम्. B. वशम्.

125, A. G, om, one पश्य. D. अपि for इव.

126. A. B. एव for इव. A. om. ते. B. adds भार after जाल for which C. D. E. F. G. read. भार.

127. D. अये नरपराङ्मुख दशमुख कथमिदं भुजवनम् for कथम्...इदम्. C. E. F. आलोक्य. A कटुक. A. B. °भाषितानि.

128 रावणः । तत्किमनेन करिष्यसि ।

129 बाणः । यत्कृतं हैहयराजेन ।

130 रावणः । इदमहं ते भुजवनं निजप्रतापानलेन निर्दहामि ।

131 बाणः । इममहं त्वत्प्रतापानलमनेकरुचिरचापचुम्बितनिजबाहुबलाहकनिर्मुक्तनाराचधारासारैः शमयामि ।

132 रावणः ।

रे बाण मुञ्च मयि बाणशतानि पञ्च
नन्वस्ति मे करतले करवालवल्ली ।
रे पञ्चबाण निवृणु त्वमपि स्वबाणा-
न्नन्वेति सा युवतिलोकललामवल्ली ॥ ९७ ॥

133 नूपु० । अए बाणरावणाओ सअं जेव्व अप्पाणं वण्णन्ता ण लज्जेथ ।

134 रावणः । धिङ् मूर्ख कथमात्मनैव श्लाघनीयो दशकण्ठः । ननु रे

मन्दोदरीकुटिलकोमलकेशपाश-
मन्दारदाममकरन्दरसं पिबन्तः ।

---

133 अये बाणरावणौ स्वयमेवात्मानं वर्णयन्तौ न लज्जेथे ।

---

128. D. विहस्य. A. B. om. तत्.
129. B. हैहयेन.
130. A. B. G. असौ for अहम्. B om. निज. B. D. G. °अनले.
131. A. F. G. इदम् for इमम्. B. om. निज. A. B. D. add निवह after बलाहक.
132. C. D. E. अन्वेति for नन्वेति. F. कोक for लोक.
133. B. अयि. D. अप्या अप्याण-अ (?) after जेव्व. B. हुव्वन्ता. E. वण्णज -दौ.
134. B. आत्म (नै?) व & A. C. E. F. G. आत्मैक. A. श्लाघमान & G. श्लाघ्य. A. B. भार for पाश. D. तर्कयन्ति.

वीणानिनादमधुरध्वनिमुद्गिरन्तो
मद्विक्रमं मधुकरा अपि कीर्तयन्ति ॥ १८ ॥

135 बाणः । कथमयं सुरतरुकुसुमदामकमनीयकामिनीजनोपभोगसौभाग्यं विभावयति । तदिदानीम्

अमी मे दोर्दण्डास्तुलितहरशैलैकशिखरा-
स्तुरासाहं साहंकृतिकरतलन्यस्तकुलिशम् ।
पराभूय स्वैरं त्रिदशवनमुन्मूल्य सकलं
मम क्रीडोद्यानं सुरतरुमनोज्ञं विदधतु ॥ १९ ॥

इति निष्क्रान्तः ।

136 रावणः । कथमयं निर्गतः । अहं तु

अनादृत्य हठात्सीतां नान्यतो गन्तुमुत्सहे ।
न शृणोमि यदि क्रूरमाक्रन्दमनुजीविनः ॥ २० ॥

137 मञ्जी० । वत्से जानकि अधुना दैवैकरक्षणीयासि ।

138 रावणः । कर्णं दत्त्वा । अये कस्यायमाक्रन्दः श्रूयते । नभसि निपुणं निरूप्य । नूनमनेन कस्यचिन्नाराचपीडितेन कठोरमाक्रन्दता गगनपथचारिणा मारीचेन भवितव्यम् । तदेनमाश्वासयामि तावत् ।

इति निष्क्रान्तः ।

---

135. C. E. F. om. दाम. C. D. E. F. G. विडम्बयति. B. ते & E. मत् for मे. F. आस्थान for उद्यान.

136. B. उपजीविनाम्.

137. A. G. देव. B. दैवेन.

138. G. includes नभसि in the speech. A. B. परि & C. F. नि before पीडित. A. गमन for गगन. A. D. सारिणा for चारिणा. All except G. add गच्छता (& B. गच्छता च) after मारीचेन.

139 नूपु० । सहर्षम् । वअस्स दिट्ठिआ वग्घस्स मुहादो कुरङ्गीव्व इमस्स हत्थादो उव्वरिदा जाणई ।

140 मञ्जी० । सखे एवमेतत् । तदेहि । वृत्तान्तमिमं जनकराजस्य निवेदयावः ।

इति निष्क्रान्ताः सर्वे ।

**प्रथमोऽङ्कः ।**

---

139 वयस्य दिष्ट्या व्याघ्रस्य मुखात्कुरङ्गीवास्य हस्तादुर्वरिता जानकी ।

---

139. G. om. सहर्षम्. All except B. have विअ after वग्घस्स. A. C. D. E. F. om. व्व. A. B. उग्गदा.

140. F. एव for एतत्. B. C. एनम् & E. एतम्. F. जनकस्य. A. B. निवेदयामो जनकराजस्य. After सर्वे B. E. read thus:—इति श्रीजयदेवविरचिते (E. कृतौ) प्रसन्नराघवनाम्नि (E. °आख्ये महा) नाटके; & F. thus:—इति श्रीप्रसन्नराघवनाटके प्रथमोऽङ्कः पर्याप्त.

# ॥ द्वितीयोऽङ्कः ॥

। ततः प्रविशति तापसः ।

1 तापसः । समन्तादवलोक्य । अहो अयमनेकशुकशावकानुगमानिकामश्यामलहरितलतावितानमनोरमारामरमणीयसंनिवेशः प्रदेशः । नेपथ्याभिमुखमवलोक्य । कथमयं भिक्षुः । भिक्षो इत इतः ।

2 प्रविश्य भिक्षुः । अपि कुशलं तापसस्य ।

3 तापसः । क्षेममस्माकम् । इदानीं विशेषतो भवद्दर्शनात् । पुनः सप्रणयम् । भिक्षो ननु कीटवन्महीपर्यटनेन श्रान्तो भवान् । तदिह मिथिलायां पञ्चरात्रनिवासेन श्रमोऽपनेतव्यः । प्रसङ्गादयं च जनको राजा द्रष्टव्यः ।

4 भिक्षुः । किमस्माकं निरीहाणां राजदर्शनेन ।

5 तापसः । नूनमयं ब्रह्मविद्याविनोदशीलः खलु सीरध्वजः । तेन द्रष्टुमुचित एव भवादृशाम् ।

6 भिक्षुः । अये राजापि ब्रह्मविद्यावानिति सत्यमेतत् ।

---

1. A. C. D. E. F. om. तापस. A. विलोक्य. B. अये for अहो. A. om. अयम्. G. om. श्यामल. A. B. om. हरित for which D. G. have हरित्. A. om. वितान for which B. has नितान्त. D. रमणीयः. B. °वेशविशेषः. D. G. °वेशप्रदेशः. C. D. E. F. अदूरे after भिक्षुः. A. om. भिक्षो & ततः for second इतः.

2. A. om. भिक्षुः.

3. C. D. E. F. G. read thus :— ता° । क्षेममस्माकं युष्माकं च कुशलम् । भि° । इदा...दर्शनात् । ता° । पुनः &c. D. G. om. भिक्षो before ननु A. om. मही. D. तर्हीह. C. E. जनकोऽपि राजा, D. जनकराजोऽपि, & F. जनकराजापि for च... नको.

4 A. नृप for राज.

5. D. om. विद्या. G. कुशल for शील. A. B. उचितम्.

6. B. om. अपि. D. विद्वान् after विद्या. F. om. इति.

7 तापसः । भिक्षो सत्यमेतत् । देवस्य दशकण्ठ— । इत्यर्धोक्ते । देवस्य शितिकण्ठस्याज्ञा ।

8 भिक्षुः । विहस्य । अलमपलापेन । विदितं मया राक्षसः खलु भवान् । तत्कथय विश्रब्धं को भवानिति । अहमपि भवादृश एव कोऽपि ।

9 तापसः । तदाकर्ण्यताम् । अहं सकलमन्त्रिमुकुटमाल्येन माल्यवता प्रहितस्ताटकावनम् । आकर्णितं हि तेन यत्किल कोऽपि कौशिको नाम मुनी राजानमयोध्यापतिमेत्य स्वमखरक्षणाय तस्य रामनामानं तनयं सानुजं याचितवान् । तेन चावश्यं माननीयो मुनिरिति निजनयनाभ्यामपि प्रियतमौ निजतनयौ तस्य समर्पितौ ।

10 भिक्षुः । ततस्ततः ।

11 तापसः । ततस्तेन मुनिना पारितोषिकं ताटङ्कयुगलमर्पितं तस्य राज्ञः । उक्तं च । राजन् दिव्यमिदं ताटङ्कयुगलम् ।

तदिदं वीरसूकर्णनिवेशोचितमित्यसौ ।
अन्तःस्फुरन्ती रत्नानां वर्णमालेव शंसति ॥ १ ॥

---

7. A. om. भिक्षो. A. D. G. दश & B. दशकण्ठस्य. C. उक्ते: & F. उक्तौ.

8. D. तापसः for भिक्षुः. A. om. विहस्य. B. C. E. F. G. put तत्... इति in the mouth of the तापस. B. om. इति after भवान्. All except A. put अहम् ... अपि in the mouth of the भिक्षु. B. F. om. एव. B. G. add राक्षसः after कोऽपि.

9. A. om. तापसः & च for हि. C. E. F. om. कोऽपि for which D. has किमपि. A. कौशिकनामा. C. E. F. °याचितवान्सानुजम्. A. °तमः, °तनयः, °र्पितः. D. om. तस्य.

11. D. °युगम्. A. B. D. समर्पितम् which B. puts after तस्य राज्ञः. A. om. तस्य राज्ञः. E. तस्मै राज्ञे. F. अस्य राज्ञः. A. B. स राज्ञोक्तश्च. B. इदं दिव्यताटङ्कयुगलम् after राजन्. C. F. इति after युगलम्. A. has not °सूकर्णनिवेशो°. D. E. F. इव for

तेन कौसल्याकर्णयोर्निवेशनीयमिति । अनुमतं च राज्ञा । राजकुमारद्वयानुगतेन निजाश्रमपदं प्रति गतं च मुनिना ।

12 भिक्षुः । ततस्ततः ।

13 तापसः । तत इदमाकर्ण्य तत्ताटङ्कयुगलं लङ्केश्वरजनन्या निकषाया एव कर्णोचितमिति विचिन्त्य तदाहरणाय पूर्वमेव ताटकां प्रति निजानुचर एकः प्रस्थापितः । अधुना च नूनं ताटकया तत्ताटङ्कयुगलमाहृतमिति विचार्य तदानयनाय ताटकां प्रत्यहं प्रहितः ।

14 भिक्षुः । कथं पुनरिदं वृत्तान्तजातमाकर्णितं माल्यवता ।

15 तापसः ।

वार्ता च कौतुकवती विमला च विद्या
लोकोत्तरः परिमलश्च कुरङ्गनाभेः ।
तैलस्य बिन्दुरिव वारिणि दुर्निवार-
मेतत्त्रयं प्रसरति स्वयमेव लोके ॥ २ ॥

विशेषतश्च बहुतरप्रणिधिप्रणिधायी माल्यवान् ।

16 भिक्षुः । तत्कथं मिथिलोपवने भवान् ।

---

एव. All except D. have च after तेन. F. निवेश्यम्. B. om. इति. F. om. च before राज्ञा. All except G. om. च before & C. E. F. put it after मुनिना.

12. C. E. F. ततः किम्.

13. G. तत् for ततः. A. om. तत्. G. °युगम्. A. B. लङ्केश. A. निकखाया (?) & om. एव. A. B. मत्वा. C. D. E. F. आहरणप्रेरणाय. A. om. पूर्वमेव & च नूनम्. A. B. आहरणाय. B. प्रति प्राहितोऽस्मि.

15. A. B. D. °करी for °वती & भूमौ for लोके. A बहुतरः प्राणिधिमान्.

16. A. om this speech. C. E. om. तत्. B. inserts कथय before कथम्.

17 तापसः । आकर्णितं हि मया मिथिलामागतो लङ्केश्वर इति । अतस्तद्विलोकनाय प्रथममिहागतः । अधुना च ताटकावनं यास्यामि । तत्कथय तावद्भवान्पुनः कतरः ।

18 भिक्षुः । अहमपि स एव ताटकां प्रति प्रहितः । मिथिलोपवनागमनकारणं समानमावयोः ।

19 तापसः । तत्किं सताटङ्कमधुना ताटकावनम् ।

20 भिक्षुः । सताटकमिति तावत्पृच्छ ।

21 तापसः । क्व पुनः संप्रति ताटका ।

22 भिक्षुः । पुरीं प्रविष्टा ।

23 तापसः । तत्किं दशरथस्य ।

24 भिक्षुः । नहि नहि अन्तकस्य ।

25 तापसः । केन पुनः प्रातिहारायितमन्तकपुरीप्रवेशे तस्याः ।

26 भिक्षुः । रामबाणेनैव ।

27 तापसः । क एष रामः । विमृश्य । नूनं स एव यः खलु दशरथकुमारयोरग्रजः । तत्कथय क्व पुनरधुना ताटकातनयौ ।

---

17. A. om. तापसः. A. च for हि which B. D. om. A. B. put लङ्केश्वरः before मि ... तः. C. E. F. रावण for लङ्केश्वर. A. B. om. च after अधुना. C. E. F. put तत् in place of तावत् which B. om. A. भगवान्. B. D. om. पुनः. C. E. F. कतरः पुनः.

18. A. B. माल्यवता before प्रहितः. C. F. ° वने. B. समम्.

19. B. G. add सहर्षम् । तत्कथय तावत् before तत्किम् &c. C. D. E. F. कथय for किम्.

21. B. सातङ्कम्. F. संप्रति पुनः.

23. B. om. तत्.

24. A. om. one नहि.

25. F. om. तापसः. C. E, F. add संप्रति after पुनः.

26. A. B. om. एव.

27. A. B. D. om. नूनम्. B. om. यः.

28 भिक्षुः । सुबाहुस्तावत्ताटकामेवानुगतः। मारीचोऽपि शिशुक्रीडोचितरामनाराचपीडितो जीवन्मृत एव दूरं क्षिप्तः ।

29 तापसः । तत्कथं केनापीदं न कथितं लङ्केश्वरस्य ।

30 भिक्षुः । कथितमेवेदमाक्रन्दता मारीचेन ।

31 तापसः । तत्कथं न कुपितो लङ्केश्वरः ।

32 भिक्षुः । सीताभिलाषशीतले लङ्केश्वरचेतसि नारूढ एव कोपपरितापः ।

33 तापसः । क्व पुनरधुना रामलक्ष्मणौ ।

34 भिक्षुः । श्रुतं मया कौशिकानुपदं तदाश्रमान्मिथिलां प्रति प्रचलिताविति । विलोक्य सत्रासम् । कथमिमौ तावित एवाभिवर्तेते । तदस्य निशाचरवैरिणो रामस्य पुरतः स्थातुमनुचितमावयोः ।

इति निष्क्रान्तौ ।

विष्कम्भकः ।

ततः प्रविशतो रामलक्ष्मणौ ।

35 रामः । वत्स लक्ष्मण पश्य पश्यारामरामणीयकम् ।

36 लक्ष्मणः । आर्य निसर्गरमणीयोऽयमारामः । अधुना तु मधुमासावतारेण नितान्तरमणीयः ।

---

28. A. B. om. तावत्. A. अनुयातः & om. राम. A. B. D. G. मुक्त for मृत. B. G. इव for एव.

29. A. B. G. तत्किं (G. कथ) मिदानीं (G. न) कथितं केनापि लङ्केश्वरस्य. D. तत्कथितमिदानीं न केनापि लङ्केश्वरस्य.

30. A. एवम् for एव. C. E. add after एव, लङ्केश्वरस्य & F. °राय. C. D. E F. G. किल before इदम्.

31. A. B. किम् for कथम्. A. om. न, G. कुपितो न.

32. B. C. E. F. अधिरूढ.

33. A. तौ after अधुना.

34. C. E. F. आश्रमपदात्. C. E. F. om. प्रति. B. D. om. प्र before चलितौ. B. om. इति.

35. D. om. one पश्य. C. रमणीयकम् G. रामणीकम्.

36. A. अयम् for आर्य. D. स्वर्ग for निसर्ग. A. B. निसर्गादेव. D. om. अधुना ... रमणीयः. A. °रमणीयम्.

37 रामः । सहर्षम् । कथमवतीर्णैव वसन्तमासलक्ष्मीः । विमृश्य । एवमेतत् । तथाहि

इह मधुपवधूनां पीतमल्लीमधूनां
विलसति कमनीयः काकलीसंप्रदायः ।
इह नटति सलीलं मञ्जरी वञ्जुलस्य
प्रतिपदमुपदिष्टा दक्षिणेनानिलेन ॥ ३ ॥

अपि च ।

मलयशिखरादाकैलासं मनोभवशासना-
द्भुवनवलयं जेतुं वाञ्छन्वसन्तसमीरणः ।
विहितवसतिं कैलासाग्रे भुजङ्गधरं हरं
मनसि विमृशन्भीतः शङ्के प्रयाति शनैः शनैः ॥ ४ ॥

38 लक्ष्मणः । आर्य अहं त्वेवं तर्कयामि ।

पथि पथि लतालोलाक्षीभिः स्रवन्मधुसीकरं
कुसुमनिकरं वर्षन्तीभिः सहर्षमिवार्चितः ।
मधुकरवधूगीतासक्तं कुरङ्गकमास्थितः
प्रसरति वने मन्दं मन्दं वसन्तसमीरणः ॥ ५ ॥

39 रामः । वत्स अलमनेन । तद्यावदयं भगवान्विश्वामित्रस्तत्रभवतो याज्ञवल्क्यस्य समागमसुखमनुभवति तावत्तदीयसायंतनदेवतार्चनोचितानि कुसुमान्यवचीयन्ताम् ।

40 लक्ष्मणः । बाढम् । इति लताविटपान्तरितः कुसुमावचयं नाटयति ।

---

37. A. B. °तीर्ण. & °मासः. A. G. मधु for वसन्त. A. om. एवमेतत्; & वल्ली for मल्ली. C. E. F. विसरति रमणीयः. D. विसरित (?) कमनीयः. A has not °ति कमनीयः काक°. A. B. वाञ्छन् जेतुम्. A. has not °सतिम्.

38. D. om. त्वेवम्.

39. A. °चित° & °चीयताम्.

41 रामः । विलोक्य । कथमिदमितश्चण्डिकायतनम् । अञ्जलिं बद्ध्वा ।

मातः करुणतरङ्गिणि विकसन्नयनामृतोर्मिसीकरिणि ।
तरुणतुहिनकरचूडामणिरमणि त्वां नमस्यामि ॥ ६ ॥

पुनरन्यतो विलोक्य । अये इयमसौ मदकलकलहंसोत्तंसितसितसरोजराजिराजिता सरसी सरसीकरोति मे चेतः । पुनः सकौतुकम् । अये कथमयं नलिनीवनविहारिणीं सहचरीमपि विहाय कलहंसपोतश्चूतविटपान्तरालमनुसरति । कर्णं दत्त्वा । अये क एष मदकलकरिकनकशृङ्खलामणिराणितानुकारी कोऽपि कलकलः समुल्लसति । विमृश्य । नूनं राजहंसासिञ्जितहारि मञ्जीरगुञ्जितमेतत् । तदवश्यमिह सलीलचलच्चरणरणन्मणिनूपुरया पुराङ्गनया कयाचन चण्डिकायतनमागच्छन्त्या भवितव्यम् । तदलमस्माकमितोऽवलोकनेन । परस्त्रीति शङ्कापि संकोचाय रघूणाम् ।

42 नेपथ्ये । भर्तृदारिके इत इतः ।

43 रामः । कथमियं राजकुमारिका । तदालोकयामि तावत् । विलोक्य सहर्षकौतुकम् ।

केयं श्यामोपलविरचितोल्लेखहैमैकरेखा-
लग्नैरङ्गैः कनककदलीकन्दलीगर्भगौरैः ।

---

41. A. om. विलोकय. D. om. अन्यतः. C. D. E F. अवलोकय. C. E. F. कथम् after अये. D. इदम् for इयम्. B. om. मे. A. B. om. अयम्. A. नलिन om. अपि, & कलकलः कोऽपि. F. ननु for नूनम्. A. D. om. सिञ्जित. A. मञ्जु for मञ्जीर F. रञ्जित for गुञ्जित. A. चल° & om. मणि. A. B. D. put पुराङ्गनया before भवितव्यम्, A. B. om. कया चन. C. E. कयाचित्. A. B. D. om. इति after स्त्री.

43. D. हैम & पूरैः for गौरैः.

हारिद्राम्बुद्रवसहचरं कान्तिपूरं वमद्भिः
कामक्रीडाभवनवलभीदीपिकेवाविरास्ति ॥ ७ ॥

ततः प्रविशति सीता सखी च ।

44 सीता । हला पेक्ख पेक्ख । अज्ज इममुज्जाणं वसन्दसहअरेण सअं जेव्व मम्महेणालङ्किदं विअ अतिमेत्तरमणिज्जं पडिहादि ।

45 सखी । अनवद्याङ्गि एवमेतत् ।

46 रामः । अये सर्वानवद्याङ्गीति वक्तव्यम् । नन्वस्याः

बन्धूकबन्धुरधरः सितकेतकाभं
चक्षुर्मधूककलिकामधुरः कपोलः ।
दन्तावलीविजितदाडिमबीजराजि-
रास्यं पुनर्विकचपङ्कजदत्तदास्यम् ॥ ८ ॥

पुनर्निर्वर्ण्य । अहो मुग्धाया अप्यस्याः प्रकृतिकमनीयपदार्थपरिशीलनौचित्यचातुरी । तथा हीयं हि

पदाभ्यामुन्निद्रामधरयति शोणाम्बुजरुचिं
कराभ्यामादत्ते नवकिसलयानामरुणताम् ।
प्रवालस्य च्छायां दशनवसनाग्रेण पिबति
स्मितज्योत्स्नापूरैरुपहसति कान्तिं हिमरुचेः ॥ ९ ॥

---

44 हला प्रेक्षस्व प्रेक्षस्व । अद्येदमुद्यानं वसन्तसहचरेण स्वयमेव मन्मथेनालङ्कृतमिवातिमात्ररमणीयं प्रतिभाति ।

---

A. G. वहद्भिः for वमद्भिः. D. कदली for वलभी. F. आस्ते for अस्ति.

44. C. E. F. उज्जाणअम्. B. om. सअम्. All except D. G. om. जेव्व.

46. B. om. अये. A. कैतक. C. E. F. मधुर & D. रमणीय for कमनीय. A. om. इयं हि & has पद्माल्पा (?). B. भारैः for पूरैः. A. D. हिमरुचः.

47 सखी । भर्तृदारिके इदं तच्चण्डिकायतनम् ।

48 सीता । अञ्जलिं बध्द्वा । देवि ससहरमौलिदेहद्धवासिणि तिहुअणवरसुआसिणि णमो दे ।

49 सखी । विहस्य । समुचितैव प्रणामपरिपाटी ।

50 सीता । सप्रणयकोपम् । अलमलीअजप्पिदेण ।

51 सखी । अञ्जलिं बध्द्वा ।

कान्तमिन्दुमणिदामकोमले
कोमलेन्दुमुकुटाङ्कशायिनि ।
इन्दुचारुमचिरेण विन्दता-
मिन्दुसुन्दरमुखी सखी मम ॥ १० ॥

52 रामः । अये कथमस्याः परिणयमनोरथप्रणयी सखीजनः । विमृश्य । उचितमेवैतत् । वयःसन्धौ खल्वियं वर्तते । तथा हि

अपक्रान्ते बाल्ये तरुणिमनि चागन्तुमनसि
प्रयाते मुग्धत्वे चतुरिमणि चाश्लेषरसिके ।
न केनापि स्पृष्टं यदिह वयसा मर्म परमं
तदेतत्पञ्चेषोर्जयति वपुरिन्दीवरदृशः ॥ ११ ॥

53 सखी । अयि देवि सत्वरं पूरय मे मनोरथं यावदियं न दुर्मनायते सखी ।

---

48 देवि शशधरमौलिदेहार्धवासिनि त्रिभुवनवरसुवासिनि नमस्ते ।
50 अलमलीकजाल्पितेन ।

---

48. A. अयि before देवि. A. सततम् for सस & om. मौलि for which B. has मुकुट. D. G. °धारिणि for वासिनि. C. E. F. वर for धर. G. repeats णमो.

49. G. om. विहस्य.

52. A. B. D. G. om. एव. A. स्पष्टम्. B. तदिह for यदिह.

53. F. अये for अयि. D. G. मे पूरय. A. B. put मे after इयम्.

54 सीता । सप्रणयकोपम् । किंति दुम्मणायिस्सम् ।

55 लक्ष्मणः । अयि राजहंसकन्यके किमिति दुर्मनायसे । अयं ते चूत-विटपान्तरितः कान्तः ।

56 सीता । हला कस्स इमो करिकलहकण्ठणिग्घोसमहुरो कण्ठसद्दो सुणीआदि । ता णिरूवम्ह । इति परिक्रामतः ।

57 रामः । सविषादम् । कथमियमन्तारितैव लतया । लतां प्रति ।

स्तनविजितस्तबकश्रीरधराधरितप्रवालनवलक्ष्मीः ।
अयि लतिके तिरयन्ती तरलदृशं नावलम्बसे लज्जाम् ॥ १२ ॥

पुनः सहर्षम् ।

श्यामच्छवीनामियमन्तराले
प्रादुर्भवन्ती कदलीदलानाम् ।
कलेव चान्द्री नवनीरदानां
चकोरवन्मां मुदितं करोति ॥ १३ ॥

पुनः कदलीं प्रति ।

हे बालहेमकदलि ध्रुवमीहसे त्व-
मूरुश्रियं कलयितुं तरलायताक्ष्याः ।
एनां विलम्बय विलासवतीं चिरं हि
स्त्रीणां कलाः परिचिताः स्थिरतां प्रयान्ति ॥ १४ ॥

---

54 किमिति दुर्मनायिष्ये ।
56 हला कस्यायं करिकलभकण्ठनिर्घोषमधुरः कण्ठशब्दः श्रूयते । तन्निरूपयावः ।

---

55. A. B. असौ after अयम्. A. om. ते. B. नूत (?) for चूत.

56. A. om. हला. F. सिणिद्धो स° for णिग्घोस. A. परिक्रान्ता. G. om. the direction.

57. A. लव for नव. B. D. E. अपि for अयि. D. लतानाम् for दलानाम्. G. लतिके for कदली.

58 सीता। हला को इमो कणअवण्णो सिहण्डिपिच्छमण्डिदकण्णो मुद्धत्तणविमुक्कलोअणविआरो कुमारो दीसदि। इमं हि पेक्खन्तीए मह णिअवच्छम्मि विअ वच्छलत्तणपच्छालिअं हिअअं वट्टदि।

59 लक्ष्मणः। अये कथमस्यां सुमित्रायामिव सुचरितपवित्रिता मे चित्तवृत्तिः।

60 सीता। हला इमं कुमारं पुलोअन्तीए मह वच्छा उम्मिला चित्तमारुहदि।

61 सखी। विहस्य। नूनमयं कस्यचिद्वत्सशब्दलालनीयो भविष्यति यं विलोकयन्त्या मे त्वमपि चित्तमारोहसि। तत्पृच्छामि तावदेनम्। इति परिक्रम्य। अये राजकुमार कः खलु भवान् यस्त्वमेक एव मुग्धतयापरिशीलितास्वपि वनभूमिषु विहरसि।

---

58 हला कोऽयं कनकवर्णः शिखण्डिपिच्छमण्डितकर्णो मुग्धत्वविमुक्तलोचनविकारः कुमारो दृश्यते। इमं प्रेक्षमाणाया मम निजवत्स इव वत्सलत्वप्रक्षालितं हृदयं वर्तते।

60 हला इमं कुमारं विलोकयन्त्या मे वत्सोर्मिला चित्तमारोहति।

---

58. C. E. F. इमो को. A. B. D. G. °कण्णपूरो. A. विमन्त & B. विभत for विमुक्क. D. लोअपाल for लोअण. C. विस्सारो & E. विप्पारो for विआरो. G. om. हि. All except G. have मह पेक्खन्तीए. E. °वच्च for वच्छम्मि. A वच्छलत्तेण, B. वाच्छल्ल°, C. लच्छत्तण°, E. वच्चलतए, & G. वच्छत्तण for वच्छलत्तण. D. विच्छालिअं & F. पच्छारिअं.

59. All except D. read का for कथम्. B. इयम् for अस्याम्. A. B. D. सुचरित (A. त्र) पवित्रा. G. सुचिरप्रवृत्ता. B, G. put मे before °सु

61. A. अपि after अयम्. B. G. चित्तवृत्तिम्. A. G. °रोक्ष्यसि. C. D. E. F. om. तत्. F. om. राज. C. adds वीर after भवान्. A. B. किल for त्वम्; & अपरिचितासुराज (B. वन) वीथिकासु for मुग्ध... भूमिषु.°

62 लक्ष्मणः । धिङ् मूर्खे । कथं मामग्रजेन परिसरवर्तिना नाथवन्तमप्येकाकिनमपदिशसि ।

63 सखी । सहर्षम् । कुसुमितस्तावदधुना मे मनोरथद्रुमः ।

64 सीता । हला किमेत्त अह्माणम् । ता एहि । णिअघरं जेव्व वज्जह्म । इति किञ्चित्परिक्रम्य पुनर्व्यावृत्य । हञ्जा एक्कं विसुमरिदं । णं सो सहआरपादओ अवलोअणीओ जस्स वासन्दीलिदाए सह सङ्गमं अहिलसन्दि मह अम्बाओ । इत्युभे परिक्रामतः ।

65 रामः । सहर्षम् ।

मन्मनःकुमुदानन्दशरत्पार्वणशर्वरी ।
अहो इयमितो नूनं पुनरप्यभिवर्तते ॥ १९ ॥

निर्वर्ण्य ।

वहत्यस्या दृष्टिर्विकचनवनीलोत्पलतुला-
मखण्डस्याभिख्यां वदनमिदमिन्दोः कलयति ।
कुचौ किंम्मीलत्कमलतुलनां कन्दलयत-
स्तमःशोभां चित्रां चिकुरनिकुरम्बं हि कुरुते ॥ १६ ॥

---

64 हला किमत्रास्माकम् । तदेहि । निजगृहमेव व्रजावः । हला एकं विस्मृतम् । ननु स सहकारपादपोऽवलोकनीयो यस्य वासन्तीलतया सह सङ्गममभिलषन्ति ममाम्बाः ।

---

63. G. तत् for तावत्.

64. B. om. जेव्व. A. वस्तह्म. B. D. F. गच्छह्म. A. B. G. विसुमरिदह्मि. F. वासन्दीए. A. B. समम्. C. E. F. अहिलसदि ... अम्बा. C. D. E. F. om. इति.

65. B. लसत् for शरत्. C. D. E. F. वहतु. A. कलयताम्. C. D. E. F. कलयतु. A. आकलयताम्. D. कवलयताम्. B. C. E. F. कन्दलयताम्. C. D. E. F. चित्रम्. A. तु & D. नु for हि. D. कुरुताम्.

66 सखी । एष सहकारपादपः । इति तदन्तिकमनुसरतः ।

67 रामः । कथमिमे मे परिसरमनुसरतः । तत्किंचिदपसरामि तावत् ।

68 सीता । सहकारशाखां करेण धृत्वा सकौतुकम् । हला पेक्ख पेक्ख । इमेहिं णहसिहाविलिहिदेहिं कोमलदलेहिं सम्भावीअदि जं किर इअं चूदलदा केणवि विदद्धेण णिअहत्थेण सम्भाविदेति । अह वा णिअचावलदासङ्किदेण सअं मम्महेण एव्व इति ।

69 रामः । इत्थं संभावयति भवती । मम पुनरन्यथा वितर्कः ।

मत्वा चापं शशिमुखि निजं मुष्टिना पुष्पधन्वा
तन्वीमेतां तव तनुलतां मध्यदेशे बभार ।
यस्मादत्र त्रिभुवनवशीकारमुद्रानुकारा-
स्तिस्रो भान्ति त्रिवलिकपटादङ्गुलीसन्धिरेखाः ॥ १७ ॥

70 सखी । भर्तृदारिके इयं वासन्ती लता । इदं च पश्य ।

वासन्तीरसबिन्दुं सुन्दरमिन्दिन्दिरा इह पिबन्ति ।
चिरमन्दिरमरविन्दं मन्दं मन्दं परिहरन्ति ॥ १८ ॥

71 सीता । तदेव पठति ।

---

68 हला प्रेक्षस्व प्रेक्षस्व । एभिर्नखशिखाविलिखितैः कोमलदलैः संभाव्यते यत्किलेयं चूतलता केनापि विदग्धेन निजहस्तेन संभावितेति । अथ वा निजचापलताशङ्कितेन स्वयं मन्मथेनैवेति ।

---

66. A. B. add सः before एषः. C. E. F. put एषः after °पादप. G. adds इयं च वासन्तीलता after पादप. A. om. इति. D. अन्तिके. C. E. उप° for अनु°.

67. A. °सरामि किञ्चित्.

68. G. सखी for सीता. All except A. have करे. C. om. one पेक्ख. E. इअंहि for इमेहिं. A. विहण्डिदेहि. A. om. त्ति.

69. E. G. एनाम्. A. D. दधार.

70. B. सा after इयम्. D. इमम्. A. D. चरन्ति. B. संचरन्ति.

71. D. om. सीता & puts तदेव पठति in the mouth of Râma. A. B. वासन्तीरसबिन्दुमिति after पठति.

72 रामः । किमिदानीं लतान्तरवर्णनया । नन्वियमेव

निर्मुक्तशैशवदशा शिशिरा नवीन-
संप्राप्तयौवनवसन्तमनोरमश्रीः ।
उन्मीलितस्तननवस्तबका निकाम-
मेणीदृशस्तनुलता तनुते मुदं नः ॥ १९ ॥

73 सखी । भर्तृदारिके पश्य पश्य । इयमसौ वासन्ती लता स्वयमेव सहकारपोतमालिङ्गितुं पुरः सरति ।

74 सीता । सप्रणयकोपम् । अए अलीअजप्पिणि दाणिं तुह परिसरं परिहरिअ अण्णदो गमिस्सम् ।

75 रामः ।

अमलमृणालकाण्डकमनीयकपोलरुच-
स्तरलसलीलनीलनलिनप्रतिफुल्लदृशः ।
विकसदशोकशोणकरकान्तिभृतः सुतनो-
र्मदलुलितानि हन्त ललितानि हरन्ति मनः ॥ २० ॥

76 सीता । विलोक्य सकौतुकम् । अम्मो

विसट्टपेसलुप्पलप्पलासपुञ्जसामलो
महेससोम्मसेहरप्फुरन्तसोमओमलो ।

---

74 अयि अलीकजल्पिनि इदानीं तव परिसरं परिहृत्यान्यतो गमिष्यामि ।

76 अहो

विकसितपेशलोत्पलपलाशपुञ्जश्यामलो
महेशसौम्यशेखरस्फुरत्सोमकोमलः ।

---

72. C. E. F. आ. before किम्.

73. D. G. om. one पश्य. A. सहकारक.

74. B. अलमलीअजप्पिरेण. D. om. दाणिम्.

75. A. B. G. °रुचेः. B. नलिनी. A. B. पल्लवसदृशः. A. अरविन्दकोश for वि...शोक. D. तर for कर.

76. A. E. विसुद्द, C. विसद्द, & D. विकसिअ. A. पूग & B. D. G.

लताघरम्मि को इमो अणङ्गरूवखण्डणो
विलोअणाण देइ मे सुहं सिहण्डमण्डणो ॥ २१ ॥

77 सखी । भर्तृदारिके कथय कथं लतालोकनकौतुकाद्विरतासि ।

78 सीता । अनाकर्णितकेन । तदेव पञ्चमस्वरेण पठति ।

79 सखी । उपसृत्य । कथमित्थमन्यचित्तेव लक्ष्यते । क्व पुनश्चित्तमस्याः । रामं दृष्ट्वा साकूतम् । अये इदमस्याश्चित्तगन्धगजबन्धनालानम् । पुनः सीतां हस्ते धृत्वा । भर्तृदारिके प्रणयमधुरोऽपि सखीजनः किमवधीर्यते । अथवोचितमिदम् । अधुना हि तवायं हृदयमधिवसति ।

80 सीता । स्वगतम् । कहं अवगदम्हि इमाए । इति लज्जां नाटयति ।

81 सखी । स्वगतम् । कथमियं लज्जते । तदन्यतो नयामि । प्रकाशम् । कथमद्यापि हृदयं न मुञ्चति ते प्रणयकोपः ।

---

लतागृहे कोऽयमनङ्गरूपखण्डनो
विलोचनयोर्ददाति मे सुखं शिखण्डमण्डनः ॥

80 कथमवगतास्म्यनया ।

---

पुङ्ख for पुञ्ज. D. अण्डणो (?) for खण्डणो. A. B. विलोअणेण. D. विलोलअणाणं. E. विलोअणाद्. F. विलोअणाअणन्दणो. D. F. सिहि for सुहम्. B सिहण्डि.

77. D. om. भर्तृदारिके. C. D. E. F. om. कथय. A. अवलोकन & B. C. E. विलोकन. G. om. कौतुक.

78. A. B. एव after अनाकर्णितकेन. A. om तदेव for which D. has तमेव. A. पञ्चचामरम्. B. पुनः सादरम्. D. G. पञ्चमस्वरम्. F. °स्वरेण.

79. F. om. कथम्. B. D. G. om. गन्ध. A. om. हि.

81. D. om. कथमियं लज्जते & also हृदयम् which A. puts after मुञ्चति.

82 सीता । स्वगतम् । कोवमुद्दिसिअ इमाए भणिदं ण उण इमम् । प्रकाशम् । हला कहं तुह कुविस्सं । केवलमण्णचित्तदाए ण संभाविदासि ।

83 सखी । भर्तृदारिके क्व तर्हि दत्तचित्तासि ।

84 सीता । आराममि ।

85 सखी । विहस्य । अहो ते चातुर्यं यत आरामप्रकटनेनैवाकारगुप्तिं कृतवत्यसि ।

86 सीता । सलज्जमधोमुखी तिष्ठति ।

87 रामः ।

उत्तरङ्गय कुरङ्गलोचने
लोचने कमलगर्वमोचने ।
अस्तु सुन्दरि कलिन्दनन्दिनी-
वीचिडम्बरगभीरमम्बरम् ॥ २२ ॥

88 सखी । सप्रणयस्मितम् । भर्तृदारिके अलमलमालिजनेऽपि हृदयापलापेन । ननु विदितं मया ।

अत्र ते सखि शिखण्डमण्डने
पुण्डरीककमनीयलोचने ।

---

82 कोपमुद्दिश्यानया भणितं न पुनरिमम् । हला कथं तुभ्यं कोपिष्यामि । केवलमन्यचित्ततया न संभावितासि ।

84 आरामे ।

---

82. A. त्रिकुविस्सम्. F. मए. D. om. सि.

83. G. om. भर्तृदारिके.

85. A. B. F. यत् for यतः. G. आकार for आराम. D. प्रकटवती.

87. D. सखी for राम. C. F. हरिण for कमल.

88. D. om. सखी. D. G. have

श्यामतामरसदामकोमले
रामनामनि मनो मनोभवे ॥ २३ ॥

89 सीता। हला पेक्ख पेक्ख।

मअणवहूणेउररवरमणिज्जं किम्पि किम्पि कूजन्तो।
माअन्दमुउलमहुरसमहुरमुहो महुअरो ब्भमइ ॥ २४ ॥

स्वगतम्।

अयि पिबह लोअणाइं पिअजणवअणारविन्दमअरन्दम्।
अयि तरलाइ विआरह उण कह तुह्मे कह इमो अ ॥२५॥

इति रामं नयनाञ्चलेन सलीलमालोकते।

90 रामः। निर्वर्ण्य।

सर्वस्वं नवयौवनस्य भवनं भोगस्य भाग्यं दृशोः
सौभाग्यं मदविभ्रमस्य जगतः सारं फलं जन्मनः।
आकूतं कुसुमायुधस्य हृदयं रागस्य तत्त्वं रतेः
शृङ्गारस्य रहस्यमुत्पलदृशस्तत्किंचिदालोकितम् ॥ २६ ॥

---

89 हला प्रेक्षस्व प्रेक्षस्व।

मदनवधूनूपुरवरमणीयं किमपि किमपि कूजन्।
माकन्दमुकुलमधुरसमधुरमुखो मधुकरो भ्रमति ॥
अयि पिबतं लोचने प्रियजनवदनारविन्दमकरन्दम्।
अयि तरले विचारयतं पुनः क्व युवां क्वायं च ॥

---

one अलम्. B. om. अपि. A. B. D. G. रमणीय for कमनीय.

89. G. puts पुनः स्वगतम् before मअण &c. A. D. have one किम्पि. G. om. °समहुर°. A. B. D. पुनः before स्वगतम्. D. विमह (?) for पिबह & अपि for अयि. B. पुणः. A. कहम् ...कहम्. B. आलोकयते. D. आलोकति. C. E. F. अवलोक ( C. य ) ते.

90. A. दृशः. D.G. दृशाम्. G. साकूतम्. B. D.G. रामस्य for रागस्य.

91 सीता । स्वगतम् । पुनस्तामेव गाथां पठति ।

92 सखी । अयि भर्तृदारिके पश्य पश्य ।

दलदमलकोमलोत्पलपलाशशङ्काकुलोऽयमलिपोतः ।
तव लोचनयोरनयोः परिसरमनुवेलमनुसरति ॥ २७ ॥

93 सीता । सहर्षमात्मगतम् । सहि लोअणाणुबन्धाणुबद्धावि णं सुहोपसुदी इअम् । पुना राममालोकते ।

94 रामः । सप्रत्याशम् ।

अमृतमयपयोधिक्षीरकल्लोललोलैः
स्नपयति तरलाक्षी यत्र मां नेत्रपातैः ।
अपि भवति सदायं सन्मुहूर्तः

विमृश्य साविषादम् ।

कुतो वा
मधुरविधुरमिश्राः सृष्टयो हा विधातुः ॥ २८ ॥

95 प्रविश्य चेटी । भट्टिदारिए भट्टिणीहिं आणत्तम्हि । जं किर वच्छा जाणई झत्ति घरं आणीअ विचित्ताहरणेहिं मण्डीअदु । जेण ताए साणन्दं वअणारविन्दं पुलोवेम्ह ।

---

93 सखि लोचनानुबन्धानुबद्धापि ननु सुखोपश्रुतिरियम् ।

95 भर्तृदारिके भट्टिनीभिराज्ञप्तास्मि । यत्किल वत्सा जानकी झटिति गृहमानीय विचित्राभरणैर्मण्ड्यताम् । येन तस्याः सानन्दं वदनारविन्दं विलोकयामः ।

---

91. D. तदेव for ता...गाथाम्.

92. D. om. अयि. G. om. one पश्य. A. उत्पलपेशल for कोमलोत्पल.

93. F. स्वगतम्. All except D. have अयि for सहि ; & लोअणाइं after which A. has बद्धवियट्ठाणे सुहाउवस्सुदिरियम्. B. वट्टइ सुहोप°. C. E. F. बद्धाविअट्ठाणं सुहोपसुदीयं (F. ° सप्पादि), & G. वद्धसप्पदाइं ण सुहोप°. A. G. om. पुनः &c., & B. अवलोकयते.

94. B. G. भवतु.

95. B. repeats चेटी. A. जत्त सा जाणई अत्थि सतुवरम् for वच्छा... घरम्. D. चित्ता°. A. मण्डीअह.

96 सीता । हञ्जे कथं सिणेहमुद्धाओ मह अम्बाओ ।

97 चेटी । कहं ण मुद्धाओ जा तुमं णिसग्गलावण्णचन्दलेहां णेवच्छ-लच्छीलञ्छणेणालंकिदुं इच्छन्दि । तहा अ

अयि तुह मुहलेहा चन्दबिम्बे सणेहा
दसणकिरणलच्छी अच्छजोह्लासरिच्छी ।
कुवलयदलदोणीकन्दराए वहन्ती
तरलबहलमिट्ठी दुद्धधारेव दिट्ठी ॥ २९ ॥

ता आअच्छ वच्छे । गच्छम्ह णिअभुअणं एव्व ।

इति निष्क्रान्ताः स्त्रियः ।

---

96 हञ्जे कथं स्नेहमुग्धा ममाम्बाः ।

97 कथं न मुग्धा यास्त्वां निसर्गलावण्यचन्द्रलेखां नेपथ्यलक्ष्मीलाञ्छनेनालङ्कर्तु-मिच्छन्ति । तथा च

अयि तव मुखलेखा चन्द्रबिम्बे सस्नेहा
दशनकिरणलक्ष्मीरच्छज्योत्स्नासदृक्षी ।
कुवलयदलद्रोणीकन्दराया वहन्ती
तरलबहलमिष्टा दुग्धधारेव दृष्टिः ॥

तदागच्छ वत्से । गच्छामो निजभुवनमेव ।

---

96. C. om. हञ्जे & उण for सिणेह. E. F. विमुद्धाओ. D. om. मह. After अम्बाओ. B. F. G. read thus :–चेटी । भट्टिदारिए कहं ण ( F. अदिसिणेहमुद्धा वि° ) मुद्धाओ तुह अम्बाओ । सीता । कहं उण मुद्धाओ मह अम्बाओ.

97. A. B. G. om. कहं ण मुद्धाओ & A. जा also. A. तहा, B. अहवा, & F. तुह अम्बाओ for तहा अ. A. सणाहा. F. omits the 2nd & the 3rd lines; & has अमल for तरल. A. D. F. मिट्ठा. C. मुद्धधारा. A. om. ता...एव्व. D. G. om. वच्छे. G. घरम्. A. om. स्त्रियः.

98 रामः । सविषादम् । कथं नयनपथमतिक्रान्तैव कान्ता । पुनः सप्रत्याशम् ।

अप्याविरस्ति भूयोऽपि मम लोचनयोरियम् ।
दिवसेऽन्तर्हिता नक्तं चन्द्रिकेव चकोरयोः ॥ ३० ॥

99 लक्ष्मणः । आर्य इयमाविरस्ति ।

100 रामः । सहर्षम् । कथं पुनः प्राप्ता प्रेयसी । विलोक्य । न तावत् । नूनं किमप्यन्यदभिसंधायोक्तमिदं वत्सेन । उच्चैः । वत्स केयमाविरस्ति ।

101 लक्ष्मणः ।

मुग्धस्य केलिविजितस्मरचापयष्टे-
रातन्वती रुचिमतीव सुधाकरस्य ।
रागोद्धुरा स्फुटमुदञ्चिततारकश्रीः
सन्ध्याविरस्ति ननु कापि पतिंवरेव ॥ ३१ ॥

102 रामः । एवमेतत् । तथा हि

कृत्वा प्रबुद्धकमलामखिलां त्रिलोकी-
मम्भोनिधेर्विशति गर्भमसाविदानीम् ।
अन्तःप्रसुप्तहरिनाभिसरोजबोध-
कौतूहलीव भगवानरविन्दबन्धुः ॥ ३२ ॥

---

98. A. B. नेत्रमार्गम्. D. F. इव for एव. A. B. om. कान्ता. B. D. अथ for अपि. G. अस्तु. A. B. दिवसान्तर्हि ( B. रि ) ता.

100. सहर्षम् A. om. न तावत्. A. B. D. G. तदिदम् before उक्तम्. C E. om. इदम्.

101, A. कोटि for केलि & अस्तु.

102. G. adds वत्स before एवम्. A. om. तथा हि ; & अत्र for अन्तः.

103 लक्ष्मणः। आर्य दृश्यतामयमीषन्मुकुलितराग इव गगनाभोगः।

104 रामः। वत्स एवमेतत्। इदानीं हि

प्राचीमालम्बमाने घनतिमिरचये बान्धवे बन्धकीनां
संप्राप्ते च प्रतीचीं शशिकरनिकरे वैरिणि स्वैरिणीनाम्।
अर्धश्यामोपलार्धस्फटिकमिव दिशामन्तरालं विधत्ते
कालिन्दीजह्नुकन्यामिलदमलजलस्यन्दसन्दोहमैत्रीम्॥ ३३॥

पुनः सहर्षमङ्गुल्या दर्शयन्।

एतत्कोककुटुम्बिनीजनमनःशल्यं चकोराङ्गना-
चञ्चूकोटिकपाटयोर्घटितयोरुद्घाटिका कुञ्चिका।
दग्धस्यापि नवाङ्कुरस्मरतरोरार्द्रागसां प्रेयसी-
मानोद्दामगजाङ्कुशो विजयते मुग्धं सुधांशोर्वपुः॥ ३४॥

105 लक्ष्मणः।

कल्लोलक्षिप्तपङ्कत्रिपुरहरशिरःस्वःस्रवन्तीमृणालं
कर्पूरक्षोदजालं कुसुमशरवधूसीधुभृङ्गारनालम्।
एतद्दुग्धाब्धिबन्धोर्गगनकमलिनीपत्रपानीयबिन्दो-
रन्तस्तोषं न केषां किशलयति जगन्मण्डनं खण्डमिन्दोः॥३५॥

---

103. F. om. लक्ष्मणः.

104. A. B. G. om. वत्स. B. om. एतत्. A. om. इदानीं हि. F. नव for घन. C. D. E. F. किं च प्राप्ते for संप्राप्ते च. A. रवि for शशि. All except D. have उद्घाटिनी. A. D. अभि° for अपि. C. D. E. F. आर्द्रागसि. A. प्रेयसाम्. E F. प्रेयसि. G. नाल for मान. D. °अङ्कुशम्.

105. A. B. C. E. F. °पङ्कम्. A. बन्धु°, D. बन्धो°, & C. E. F. बन्धुम् for जालम्.

106 रामः। वत्स अलमतिप्रसङ्गेन। तदेहि। सायन्तनत्रिदशार्चनो-
चितकुसुमोपायनेन भगवन्तं गाधिनन्दनमुपास्वहे।

इति निष्क्रान्ताः सर्वे।

द्वितीयोऽङ्कः।

---

106. D. om. सायन्तन. A. G. उपास्महे. C. D. E. F. उपासीमहि. | G. om. इति before निष्क्रान्ताः.

## ॥ तृतीयोऽङ्कः ॥

1 ततः प्रविशति वामनकः ।

2 वामनकः । आत्मानं विलोक्य सविस्मयम् । अहो अङ्गाणं मे तुङ्गत्तणम् । अवि णाम ईरिसेहिं अङ्गेहिं एत्थ संचरन्तेण मए दुआरसिहरं भज्जीआदि । ता खुज्जो भविअ संचरिस्सम् । इति तथा करोति ।

3 प्रविश्य कुब्जकः । वअस्स वामणअ दाणिं सअलगुणसंजुत्तोसि तुमम् ।

4 वाम० । कहं विअ ।

5 कुब्ज० । पढमं जेव्व वामणो । दाणिं उण खुज्जत्तणं पत्तो ।

6 वाम० । सक्रोधम् । अए मुरुख कहं अत्तणो खुज्जत्तणं परस्सिं आरोवेसि । णं तुमं जेव्व खुज्जो । मए उण दुआरसिहरभङ्गसङ्किदेण अप्पाणम्मि खुज्जत्त णं आरोविदम् ।

---

2 अहो अङ्गानां मे तुङ्गत्वम् । अपि नामेदृशैरङ्गैरत्र सञ्चरता मया द्वारशिखरं भज्यते । तत्कुब्जो भूत्वा संचरिष्यामि ।

3 वयस्य वामनक इदानीं सकलगुणसंयुक्तोऽसि त्वम् ।

4 कथमिव ।

5 प्रथममेव वामनः । इदानीं पुनः कुब्जत्वं प्राप्तः ।

6 अये मूर्ख कथमात्मनः कुब्जत्वं परस्मिन्नारोपयसि । ननु त्वमेव कुब्जः । मया पुनर्द्वारशिखरभङ्गशङ्कितेनात्मनि कुब्जत्वमारोपितम् ।

---

1. D. वामनः.

2. A. B. C. E. F. om. वामनकः. C. E. om. अङ्गेहिं. A. जहा संचरिस्सं तेण for एत्थ संचरन्तेण. A. भज्जीयदु ; & puts अरम् before खुज्जो. D. G. om. इति before तथा.

3. D. माणवअ for वामणअ.

5. A. खुज्जओ for खुज्ज...पत्तो.

6. B. अरे for अए. B. परस्सिं & D. परम्मि. B. D. G. खुज्जओ. A, om. सक्रोधम्..खुज्जो.

7 कुब्ज० । विहस्य । कहं विआत्थिमेत्तएण तुह अङ्गेण दुआरासिहरं भज्जिस्सदि । पुनः सक्रोधम् । अरे अलीअवाआल केण तुह कहिदं अहं खुज्ज इति ।

8 वाम० । णं इमिणा जेव्व दरिअवुसहकउदसरिच्छेण पुट्ठट्ठिदेण मंसत्थवएण ।

9 कुब्ज० । विहस्य । अरे मदिसुण कहं इमो मंसत्थवओ । अवि उण सोहग्गलच्छीए उवहाणगेण्डुओ ।

10 वाम० । साशङ्कम् । अरे सणिअं जप्प । अम्हारिसाणं अन्तेउरचराणं सोहग्गवुत्तन्तं आअणिअ भट्टा कुविस्सदि ।

11 कुब्ज० । अलं भीरुत्तणेण । दाणिं उज्जाणघरम्मि वट्टदि भट्टा ।

---

7 कथं वितस्तिमात्रेण तवाङ्गेन द्वारशिखरं भङ्क्ष्यते । अरे अलीकवाचाल केन तव कथितमहं कुब्ज इति ।

8 नन्वनेनैव दृप्तवृषभककुदसदृशेन पृष्ठस्थितेन मांसस्तबकेन ।

9 अरे मतिशून्य कथमयं मांसस्तबकः । अपि पुनः सौभाग्यलक्ष्म्या उपधानगेन्दुकः ।

10 अरे शनैर्जल्प । अस्मादृशानामन्तःपुरचराणांसौभाग्यवृत्तान्तमाकर्ण्य भर्ता कोपिष्यति ।

11 अलं भीरुत्वेन । इदानीमुद्यानगृहे वर्तते भर्ता ।

---

7. B. अरेरे & D. अये for अरे. A. D. om. अहम्.

8. A. om. णं. A. तुह, B. दरीपत्तवरीसभ, C. E. दरिअवसह, & F. गिरि (which is translated by गिरिशवृषभ,) for our दरिअवुसह. G. °सरिसेण & adds उव्वहिएण at the end.

9. A. B. D. om. विहस्य. G. अए. C. E. F. ईरिसो for इमो & कीलन for उवधान. A. G. °गण्डओ.

10. A. सुणियम् (?). D. जेव्व for जप्प & वासिणम् & G. °चारिणम् for °चराणम्.

11. D. भीतत्तणेण A. om. दाणिम्. A. राणी, B. G. धाण, D. न धाण for उज्झाण. A. D. om. वट्टदि.

12 वाम० । णाहि णाहि । अज्ज किर कस्सवि पाहुणिअस्स महेसिणो आअमणं पडिवालअन्तो बहिर्मण्डवे वट्टदि ।

13 कुब्ज० । ता हदम्ह ।

14 वाम० । किंति ।

15 कुब्ज० । णं पढमं जेव्व एक्केण महेसिणा जण्णवक्केण उवदिट्ठो इमो राआ अच्छिमीलणेहिं रत्तिओ गमावेदि । दाणिं उण इमिणा उवदिट्ठो अन्तेउरं जेव्व परिहारिस्सदि। तदो किमिमो अम्हेहिं खवणोव्व कप्पडपेडएहिं करिस्सदि ।

16 वाम० । सच्चं एदम् । परं इमो महेसी अम्हाणं राइणो उवदेसत्थं ण आअदो । किं उण हरधणुद्दंसणत्थम् ।

---

12 नहि नहि । अद्य किल कस्यापि प्राघुणिकस्य महर्षेरागमनं प्रतिपालयन्बहिर्मण्डपे वर्तते ।

13 तद्धताः स्मः ।

14 किमिति ।

15 ननु प्रथममेवैकेन महर्षिणा याज्ञवल्क्येनोपदिष्टोऽयं राजा अक्षिमीलनै रात्रीर्गमयति । इदानीं पुनरनेनोपदिष्टोऽन्तःपुरमेव परिहरिष्यति । ततः किमयमस्माभिः क्षपणक इव कर्पटपेटकैः करिष्यति ।

16 सत्यमेतत् । परमयं महर्षिरस्माकं राज्ञ उपदेशार्थं नागतः । किं पुनर्हरधनुर्दर्शनार्थम् ।

---

12 B. णखु णखु & A. C. F. G. णहु णहु. D. णहु only. All except D. G. om. किर. D. om. कस्सवि. B. पामाणिअस्स. B. D. G. बाहिर.

13. B. om. ता & repeats हदम्ह. G. हा for ता.

14. B. repeats किंति

15. D. om. णम्. A. अच्छिणी मीलीइएति (?). D. गमे (?) & G. गमेदि. D. तदा अ for तदो. B. om. इमो. B. खवणकवड, सपणउपकण्यए (?), E. कमणेक्क, for खवणोव्व कप्पड F. om. तदो किम् &c.

16. B. एवम् for एदम् C. E. F. ण & G. जइ for परम् which B. om. C. E. F. G. om. ण before आअदो. G. भवे। इमो in place of किम्.

17 कुब्ज० । किं इमस्स महेसिणो होमग्गिधूमसामलिअलोअणस्स हर-चावदंसणेण । ता तक्केमि खत्तिअबम्हणो इमोत्ति ।

18 वाम० । विहस्य । अए कहं तणुव्व मदीवि तुह खुज्जा जं एरिसं तक्केसि । सच्चं खत्तिअबम्हणो एव्व इमो ।

19 कुब्ज० । ता कोवि अणत्थो संभावीअदि । जं किर तवस्साक-रिसिदो इमो खत्तिअबम्हणो उज्जमहीणस्स अम्हाणं राइणो रज्जं गहीदुं आअदोत्ति ।

20 वाम० । सन्तं पावम् । ईरिसं मा जप्प । इमो हि चिरतवस्साप-

---

17 किमस्य महर्षेर्होमाग्निधूमश्यामलितलोचनस्य हरचापदर्शनेन । तत्तर्कयामि क्षत्रियब्राह्मणोऽयमिति ।

18 अये कथं तनुरिव मतिरपि ते कुब्जा यदीदृशं तर्कयसि । सत्यं क्षत्रियब्राह्मण एवायम् ।

19 तत्कोऽप्यनर्थः संभाव्यते । यत्किल तपस्याकर्षितोऽयं क्षत्रियब्राह्मण उद्यमहीनस्यास्माकं राज्ञो राज्यं गृहीतुमागत इति ।

20 शान्तं पापम् । ईदृशं मा जल्प । अयं हि चिरतपस्यापरितोषितस्य ब्रह्मणो वाचया

---

17. C. D. E. F. om. महेसिणो. A. om. अग्गि & has मलिण. B. सवलिअ. B. तथा for ता. A. B. इमो क्षत्तिअबम्हणो हवे for तक्केमि...त्ति. All except A. have इति at the end.

18. D. G. om. अए. A. वङ्कुणा & B. D. G. वङ्कुणी for खुज्जा. F. om. जं. D. G. एवम् for एरिसम्. A. B. D. अपि before तक्केसि. A. C. D. F. तक्केमि. B. puts एव after इमो. C. D. E. F. G. om. एव.

19. A. G. चिर before तव°. A. तवस्सासिदो. G. adds तिव्वं पेक्खमाणो after इमो. A. उज्जमिय. इदो (?) B. उज्जुयमायिणा. C. D. उज्जमदिणो and G. उज्जुमादिणो. B. C. राएसिणो. C. गहीईमाअदो° (?)

20. C. E. F. repeat [illegible]तं पावम्.

रितोसिदस्स बम्हणो वाआए खत्तिअत्तणं परिहरिअ बम्हणत्तणं पत्तो ।

21 कुब्ज० । कहं तणुव्व मदीवि तुह वामणी । जं एरिसेवि अलीअलोकवुत्तन्ते पत्तिआअदि । जइ कस्सवि वाआए खत्तिओ वि बम्हणो होइ ता मह वाआए तुमं वि बह्मणो होसि ।

22 वाम० । अए बालिस कहं तुह गोमुहस्स भअवदो चउम्मुहस्स वि णात्थि अन्तरम् ।

23 कुब्ज० । जइ इमो सुद्धो बम्हणो ता किं इमस्स चावचिन्ताए ।

24 वाम० । अत्थि कारणम् । तस्स हि पासम्मि तदो जेव्व गहीदचावविज्जा दोणि खअित्तकुमारा वसन्दि । ताणं दंसइस्सदि चावंति ।

---

क्षत्रियत्वं परिहृत्य ब्राह्मणत्वं प्राप्तः ।

21 कथं तनुरिव मतिरपि ते वामनी यदीदृशेऽप्यलीकलोकवृत्तान्ते प्रत्याय्यते । यदि कस्यापि वाचया क्षत्रियोऽपि ब्राह्मणो भवति तन्मम वाचया त्वमपि ब्राह्मणो भवसि ।

22 अरे बालिश कथं तव गोमुखस्य भगवतश्चतुर्मुखस्यापि नास्त्यन्तरम् ।

23 यद्ययं शुद्धो ब्राह्मणस्तात्किमस्य चापाचिन्तया ।

24 अस्ति कारणम् । तस्य हि पार्श्वे तत एव गृहीतचापाविद्यौ द्वौ क्षत्रियकुमारौ वसतः । तयोर्दर्शयिष्यति चापमिति ।

---

A. बम्हणस्स for बम्हणो. C. E. F. वाआ for वाआए.

21. D. अविदिग्धी (?) for मदीवि तुह. A वङ्कुणी for वामनी. B. F. एरिसम् & G. एरिस.° D. G. om. वि after एरिसे. C. E. F. वअणे for वुत्तन्ते. G. adds वि after वुत्तन्ते. A. B. D. om. वि after खत्तिओ. F. om. होइ.

22. A. om. this speech. D. G. अरे. D. अणत्थि अं (?) for वि... अन्तरम्.

23. A. om. जइ...बम्हणो. A. B. D. G. सुध्ध°. C. E. F. add इर before चाव.

24. A. से for तस्स. D. G. om. हि. A. D. om. तदो जेव्व. G. वहान्ति. D. om. ति.

25 कुब्ज० । ता सुध्धासओ इमो ।

26 वाम० । अह इम् ।

27 कुब्ज० । ता कहेहि दाव इमस्सिं अलीअदूसणारोवेण मह पावं उप्पण्णं ण वेति ।

28 वाम० । पावंति किं भणीअदि । णं महापावं उप्पण्णम् ।

29 कुब्ज० । मुरुख ण आणासि रे धम्मस्स तत्तम् । सम्बन्धिअणे परिहासवअणाइं ण हु पावकारणाइं ।

30 वाम० । कहं उण इमो तुह सम्बन्धिअणो ।

31 कुब्ज० । ण आणासि रे । अस्सावि दोण्णि कुमारा अम्हाणं वि दोण्णि कुमारीओ । ता तक्केमि सम्बन्धिअणो हविस्सदित्ति ।

---

25 तच्छुद्धाशयोऽयम् ।

26 अथ किम् ।

27 तत्कथय तावदस्मिन्नलीकदूषणारोपेण मम पापमुत्पन्नं न वेति ।

28 पापमिति किं भण्यते । ननु महापापमुत्पन्नम् ।

29 मूर्ख न जानासि रे धर्मस्य तत्त्वम् । सम्बन्धिजने परिहासवचनानि न खलु पापकारणानि ।

30 कथं पुनरयं तव सम्बन्धिजनः ।

31 न जानासि रे । अस्यापि द्वौ कुमारावस्माकमपि द्वे कुमार्यौ । तत्तर्कयामि सम्बन्धिजनो भविष्यतीति ।

---

25. A. सुद्यासतु ( translated as सुखेनास्ताम् ) & C. E. सुध्धासो.

27. D. इमाम्मि. A. विभ after इमास्सिम्. A. D. रोवणेण. D. G. णम् before मह.

28. D. om. पावन्ति. A. संपण्णम्.

29. D. G. अरे before मुरुख. A. G. om. रे. B. धम्मस्स वुत्तम्. C. E. F. धम्मवुत्तन्तम्. D. धम्मतत्तम्. B. सम्बन्धिअ°. D. जण°. B. C. E. F. om. हु. B. G. करणाइं.

31. D. G. add अरे before ण. A. B. D. G. om. रे. B. दोवि in both places. D. कुमारआ. A. om. अम्हाणं...°रीओ. F. om. वोणि. A. B. D. सम्बन्धो. B. C. E. om. त्ति.

32 वाम०। निश्वस्य। कहं उण अम्हाणं एरिसं पुण्णम्।

33 नेपथ्ये।

ताटङ्किना झटिति ताडितताटकेन
रामेण पद्मरमणीयविलोचनेन।
क्रीडाशिखण्डकधरेण सलक्ष्मणेन
साकं मुनिः कुशिकसूनुरितोऽयमेति॥ १॥

34 वाम०। सहर्षविस्मयम्। अहो जा किर सअललोअभीसणा रक्खसी ताडएत्ति सुणीअदि सा इमिणा जइ ताडिदा ता इमस्सि हरचावारोवणं वि संभावीअदि। ता एहि इमं कण्णसुहारसं भट्टिणीणं समप्पम्ह।

इति निष्क्रान्तौ।

प्रवेशकः।

ततः प्रविशति रामलक्ष्मणानुगतो विश्वामित्रः।

35 विश्वामित्रः। अङ्गुल्या दर्शयन्। वत्स राम

एतत्तर्कय चक्रवाकहृदयाश्वासाय तारागण-
ग्रासाय स्खलदिन्दुमण्डलपरीहासाय भासां निधिः।

---

32 कथं पुनरस्माकमीदृशं पुण्यम्।

34 अहो या किल सकललोकभीषणा राक्षसी ताडकेति श्रूयते सा अनेन यदि ताडिता तदस्मिन्हरचापारोपणमपि संभाव्यते। तदेहीमं कर्णसुधारसं भट्टिनीभ्यः समर्पयामः।

---

32. G. विहस्य. All except A. om. उण. C. E. F. भाअधेअम्.

34. B. D. °र्ष सवि°; & B. च after it. A. om. अहो & जम् for जा. C. D. E. F. om. जइ. D. om. ता & has इमस्स. C. D. E. F. om. वि. D भट्टिणीए. G. om. इति before निष्क्रान्तौ and puts it before प्रवेशकः.

35. B. C. F. G. om. विश्वामित्रः. A. om. राम. D. G. रामभद्र. B. D.

दिक्कान्ताकुचकुम्भकुङ्कुमरसन्यासाय पङ्केरुहो-
ल्लासाय स्फुटवैरिकैरववनत्रासाय विद्योतते ॥ २ ॥

36 रामः । अञ्जलिं बद्ध्वा ।

लालयन्तमरविन्दवनानि
क्षालयन्तमभितो भुवनानि ।
पालयन्तमथ कोककुलानि
ज्योतिषां पतिमहं महयामि ॥ ३ ॥

37 विश्वा० । स्वगतम् । अपि नाम मयोपनीयमानं वत्सरामभद्रमचिरादेव जनकस्तनूजया संभावयिष्यति ।

38 लक्ष्मणः । आर्य पश्य पश्य ।

यावन्नीरनिधेः प्रभातसमयः प्रोद्धृत्य लोकत्रयी-
माणिक्यं रविबिम्बमम्बरवणिग्वीथीपथे न्यस्यति ।
तावत्कर्तुमिवास्य मूल्यमुचितं पद्माकरेण स्वयं
लक्ष्मीर्लब्धविकाशपङ्कजकरन्यस्ता पुरः स्थाप्यते ॥ ४ ॥

39 विश्वा० । सहर्षमात्मगतम् । अये वत्स लक्ष्मणेनैव दत्तमुत्तरम् । देवताधिष्ठितानि हि मुग्धजनवचनानि भवन्ति ।

---

G. स्फुरत् for स्खलत्. D. कुल for वन.

36. A. कुलानि for वनानि. C. E. कलयामि.

37. A. वत्सम्. A. B. रामचन्द्रम्. B. सह after तनूजया. A. योजयिष्यति.

38. C. E. G. om. one पश्य. D. °समये. A. बद्ध for लब्ध.

39. A. om. वत्स & एव. A. B. खलु for हि. All except A. B. om. जन. D. om. भवन्ति.

40 रामः । भगवन् कथमियं बहुतरकरितुरङ्गतरङ्गितापि राजधानी तपोवनभूमिरिव प्रशान्तपावनी विभाव्यते ।

41 विश्वा० । क इह विस्मयः । नन्विह जनकः प्रतिवसति यस्यायं भगवान्याज्ञवल्क्यो गुरुः ।

42 रामः । सोऽयं भगवानस्य गुरुर्यः किल योगीश्वर इति ख्यायते ।

43 विश्वा० । वत्स स एवायम् ।

पादोपजीवनाद्भानोः प्रबोधमुपलभ्य यः ।
अभूद्योगीश्वरख्यातेः सद्म पद्ममिव श्रियः ॥ ९ ॥

तदेहि राजभवनमुपसर्पामः ।

इति परिक्रामन्ति ।

44 नेपथ्ये ।

पयोभिः सिच्यन्तां बहलविलसत्कुङ्कुमरसैः
प्रसूनैः कीर्यन्ता परिमलमिलल्लोलमधुपैः ।
चतुष्कैः पूर्यन्तामविरललसन्मौक्तिकगणै-
र्मुदा पौरस्त्रीभिर्नगरपथरथ्याङ्गणभुवः ॥ १० ॥

45 विश्वा० । नूनमस्मदभ्यागमनसानन्दस्य शतानन्दस्य वाक्परिस्पन्दः ।

---

40. All except A. B. add रामं प्रति before भगवन् for which D. भगवान्. A. B. add विश्वामित्र after भगवन्. B. G नर for तर. All except A. B. तुरङ्ग०. D. °शान्त.° C. E. F. दृश्यते.

41. D. om. this speech. C. E. F. वत्स before कः. C. जनकराजः, E. जनको राजा, F. जनकराजा.

42. D. om. this speech. C. किल after अयम्. B. खलु for अस्य & विख्या°.

43. A. B. आः before वत्स. A. om. सः. C. E. F. °सेवनात्. A. प्रसादम् B. लेभे for अभूत्. G. निष्क्रान्तः.

44. D. गलत् for लसत्. A. B. °मयैः for °गणैः.

45. A. जनकस्य for शतानन्दस्य. A. B. G. वाक्यपरि°. A. अलम् for

विलोक्य । अहो अस्य रभसातिशयो यदयं कृतमपि नगरपरिष्कारं पुनरादिशति ।

46 प्रविश्य शतानन्दः । भगवन् अभिवादये ।

47 विश्वा० । सौम्य आयुष्मान्भूयाः ।

48 शतानन्दः । भगवन् अयमसौ जनको राजा भवन्तं प्रतीक्षते ।

49 विश्वा० । विलोक्य । अये स एष जनकः ।

अङ्गैरङ्गीकृता यत्र षड्भिः सप्तभिरष्टभिः ।
त्रयी च राज्यलक्ष्मीश्च योगविद्या च दीव्यति ॥ ७ ॥

ततः प्रविशति जनकः ।

50 जनकः । कृताञ्जलिर्दृष्ट्वा । अये

यः काञ्चनमिवात्मानं निक्षिप्याग्नौ तपोमये ।
वर्णोत्कर्षं गतः सोऽयं विश्वामित्रो मुनीश्वरः ॥ ८ ॥

उपसृत्य । भगवन् अयं ते समीहितसम्पल्लतासमुद्गमारामः प्रणामः ।

51 विश्वा० । राजर्षे वसुन्धरासुनासीर सीरध्वज अप्रतिहतमनोरथो भूयाः ।

इति यथोचितमुपविशन्ति ।

52 जनकः । भगवन् अधुना सुनासीरसाधारणत्वमधःकरणं मे ।

---

अयम्. B नगरपथ°. A. B. परिवार. B. पुनरपि.

48. A. om. जनकः. A. B. G. भगवन्तम्. A ईक्षते.

49. A. येन & F. यस्य for यत्र. C. E. F. इव for the first च.

50. All except B. G. om. जनकः. A. D. G. भूत्वा for दृष्ट्वा. B. G. om. अये. D. समुन्नत for संपल्लता. A. समूहद्रुमा ° for समुद्गमा °. B. °हितसपल्लवतासमुद्गतफलारामः &c.

51. A. समीहित लभस्व for सीर ...भूयाः. B. अप्रतिरथ अवितथ ° for अप्रतिहत °. A. om. इति &c.

52. D. धारणम् for साधारणत्वम्.

53 विश्वा०। कथमिव।

54 जनकः। संप्रति हि तदीयामपि पदवीमतीत्य वर्ते।

गाधिनन्दन न नन्दनजन्मा
तादृशः स हरिचन्दनशाखी।
यादृशो मम भवत्पदपद्म-
द्वन्द्ववन्दनविधिः सुखहेतुः ॥ ९ ॥

55 विश्वा०। अहो ते प्रणयातिशयो यत्सहजप्रमोदसुधाम्बुधिनिमग्नोऽप्यस्मत्समागमजन्मनः सुखशीकरान्बहुमन्यसे।

56 जनकः। भगवन् अस्मद्विधानां राज्यरागोपरक्तचित्तचन्द्रमसां कुतस्त्योऽयं सहजानन्दचन्द्रिकोद्भेदः।

57 विश्वा०। मैवं भोः।

ज्याघातः कार्मुकस्य श्रयति करतलं कण्ठमोङ्कारनाद-
स्तेजो भाति प्रतापाभिधमवनितले ज्योतिरात्मीयमन्तः।
राज्यं सिंहासनश्रीः शममपि परमं वक्ति पद्मासनश्री-
र्येषां ते यूयमेते निमिकुलकुमुदानन्दचन्द्रा नरेन्द्राः ॥ १० ॥

58 शता०। भगवन् सत्यमेतत्। एते हि

वाराङ्गनाकरतरङ्गितचामरोर्मि-
श्वेतातपत्रशतपत्त्रिणि राजहंसाः।

---

54. All except D. om. हि. D. तत्रत्याम्. C. E. F. अतिवर्तै.

55. All except A. have यः for यत् which E. om. F. adds त्वम् after यत्. G. सुख for सुधा. A. जन्म°.

56. A. भोग for राग. B. G. चेतस्. A. कः & B. कुतः for कुतस्त्यः.

57. A. वक्षः for तेजः; अनल for अभिध; & °तलम्.

58. A. D. G. om. भगवन्. A.

क्रीडन्ति राज्यसरसि स्वरसं च धीरा
योगीन्द्रचन्द्रसुगमे पथि संचरन्ति ॥ ११ ॥

59 लक्ष्मणः । अपवार्य । आर्य राजानोऽप्यमी ब्रह्मविद्याचतुरा इति चित्रीयते मे चेतः ।

60 रामः । वत्स किमत्र चित्रम् । ननु
छत्रच्छाया तिरयति न यद्यन्न च स्प्रष्टुमीष्टे
दृप्यद्गन्धद्विपमदमषीपङ्कनामा कलङ्कः ।
लीलालोलः शमयति न यच्चामराणां समीरः
स्फीतं ज्योतिः किमपि तदमी भूभुजः शीलयन्ति ॥ १२ ॥

61 विश्वा० । आङ्गिरस उचितमात्थ राजहंसा इति । सकलकुवलयोत्तंसाः किल राजहंसा एवामी ।

62 जनकः । भगवन् इदमस्मत्प्राचीनेषु शोभते । न तु कतिपयग्रामटिकास्वामिनि मयि ।

63 विश्वा० । राजर्षे मैवम् ।
अवनिमवनिपालाः सङ्घशः पालयन्ता-
मवनिपतियशस्तु त्वां विना नापरस्य ।
जनक कनकगौरीं यत्प्रसूता तनूजां
जगति दुहितृमन्तं भूर्भवन्तं वितेने ॥ १३ ॥

---

om. एते हि. B. वृन्द for चन्द्र. C. E. F. संचरन्तः.

59. A. om. आर्य. A. अधीत for अमी which F. om. C. E. F. °कुशलाः. D. F. om. मे.

60. A. B. D. G. इह for अत्र. C. D. E. F. om. ननु. A. स्प्रष्टुमीष्टे न यच्च. D. स्फीत°.

61. G. om. किल. D. G. om. एव.

62. C. E. F. om. भगवन्. A. D. G. put मयि after तु instead of after °स्वामिनि. A. D. ग्राम.

63. D. G. om. राजर्षे. A. om. मैवम्. G. भोः after मैवम्. A. तत् for तु D. °गौरि & तनूजा. A. प्रसूताम्.

64 जनकः । भगवन् नूतनभुवननिर्माणनिपुणस्य भगवतः कियतीयमभिनववचनचातुरी नाम । स खलु भवान्यस्य

शलाकीकृत्य स्वां दृशमसमकोपारुणरुचिं
सुरश्रेणीचित्रं गगनतलभित्तौ रचयतः ।
सुधांशोर्भानोश्च प्रथमरचितं बिम्बयुगलं
सुधालाक्षासान्द्रद्रवभरितपात्रद्वयमभूत् ॥ १४ ॥

65 शता० । राजर्षे सत्यमात्थ । किमुच्यतेऽसौ भगवान् ।

त्रिशङ्कोः स्वर्लोकादवनितलपातं रचयितुं
सुनासीरे कोपाद्विकसितदृगब्जे विकसितः ।
यदीयोऽसौ नव्यत्रिदशनगरारम्भरभसः
सुरस्तोमे भक्त्या मुकुलितकराब्जे मुकुलितः ॥ १५ ॥

66 लक्ष्मणः । अपवार्य । आर्य कथमेवंविधं भगवतः प्रतापितभुवनत्रयं तपोभिधानं तेजः ।

67 रामः । अयि न विदितं ते ।

रोषाभितप्तपुरुहूतपदाभिभूतं
दृष्ट्वा त्रिशङ्कुमथ कोपविपाटलश्रीः ।
आकुड्मलीकृतकराम्बुजराजिरम्या
सन्ध्येव दृष्टिरमरैर्यदुपासितास्य ॥ १६ ॥

---

64. C. E. F. शत & D. शतमख for नूतन. C. E. F. भवतः. A. B. गाधिनन्दनस्य भवतः after भगवतः. C. खलु स. D. om. यस्य. A. शिलाकी.° C. E. F. रुचम्.

65. B. puts भगवान् before किम्. All except A. G. om. असौ. All except D. have पद for दृग्. A. अग्रे for अब्जे.

66. All except D. G. om. अपवार्य. A. om. आर्य. B. °विश्वस्य. A. om. भगवतः. F. प्रमापित. B. °त्रयस्य. A. तत् for तपस्.

67. B. C. E. G. अपि. D. इदम् before ते. A. B. G. राजर्षेरिदम् after ते. D. G. भूत for तप्त. D. °रम्यम्.

68 विश्वा० । राजर्षे अपि तावद्रत्नगर्भागर्भसंभवं कन्यारत्नमलङ्कुरुते त्वाम् ।

69 जनकः । भगवन् भवत्प्रसादादधुना जामातृरत्नमप्यलङ्करिष्यते । राममवलोक्य सकौतुकम् । भगवन्

सकलजनविलोचनोत्सवाना-
मयमयनं कतरः पुरः कुमारः ।
हरितमणिमयूखहारिणो यः
कलयति कल्पतरोः प्ररोहलीलाम् ॥ १७ ॥

70 शता० । भगवन् अयं च कतरो यः खल्वस्यैव

नीलनीरजदलोज्ज्वलकान्ते-
रन्तिके स्फुरति काञ्चनगौरः ।
लोचनस्य सुदृशः श्रवणाग्रे
संनिविष्ट इव चम्पकगुच्छः ॥ १८ ॥

71 विश्वा० । नाम्ना तावद्रामलक्ष्मणावेतौ ।

72 जनकः । अहो कर्णामृतम् ।

73 शता० । निर्वर्ण्य । भगवन्

एतयोरहमुदाररूपयो-
रुल्लसत्सहजसौहृदश्रियोः ।

---

68. A. नाम after अपि. C. E. F. संभूतम्.

69. B. om. भगवन्. A भवतः & D. त्वत् for भवत्. B. जामातरम्. A. D. F. °करिष्यति. F. राममुखम्. B. D. आलोक्य. F. G. विलोकन. C. D. E. पुनः for पुरः. A. B. कुमार एषः. A. D. °मयस्य for °मयूख. D. मयूष. B. यत्. A. प्रतीह (?) लीलाम्.

70. A. has भगवतश्च करतो यः खलु यस्यैव for our शता० | ...एव. D. उत्पल for उज्ज्वल.

73. A. om. भगवन्. D. has for the last two lines of the nine-

कामापि स्वजनतां विभावये
कौस्तुभामृतमयूखयोरिव ॥ १९ ॥

74 जनकः ।

एतयोः प्रकृतिरम्यरूपयो-
रुल्लसत्सहजसौहृदश्रियोः ।
अन्तरे स्फुरति कोऽपि संनिधिः
प्रत्यगात्मपरमात्मनोरिव ॥ २० ॥

75 विश्वा० । अयि योगीश्वरशिष्य ईदृशेषु गभीरेष्वभिनवोदन्तपीयूषत्रेशन्तेषु भवत एव मनो निमज्जति । स्वजनभावे पुनरनयोर्वयमपि साक्षिणः ।

76 जनकः । तत्किं भ्रातरावेतौ ।

77 विश्वा० । अथ किम् ।

78 जनकः । सहर्षं निर्वर्ण्य ।

तनुश्रिया निर्जितचम्पकोत्पलौ
सुवर्णनीलोत्पलकोशकोमलौ ।
अहो दृशामुत्सवदानदक्षिणौ
सुलक्षणौ लक्ष्मणलक्ष्मणाग्रजौ ॥ २१ ॥

पुना रामं विलोक्य सकौतुकम् । भगवन् किमेतत् ।

यथाहं निःसीमोत्सवसुभगभोगे भवकथा-
पथातीते चेतःप्रणयिनि रमे पुंसि परमे ।

---

teenth stanza those of the next, and omits speech 74.

74. C. E F. अलमुदार for प्रकृतिरम्य. D. G. आन्तरः for अन्तरे.

75. C. E. F. अये. B. om. गभीरेषु, & उद्धृत for उदन्त. F. पीयुषेषु for पीयूषत्रे ... षु. C. D. E. F. एव for अपि.

76. F. इमौ for एतौ.

78. A. दाम & C. D. E. F. शाखि for कोश. D. E. आलोक्य & C. F. अवलोक्य. A. D. भोगो-

तथैवास्मिन्बाले दलदमलनीलोत्पलदलो-
दरश्यामे रामे नयनपदवीमागतवति ॥ २२ ॥

79 विश्वा० । स्वगतम् । उचितमेतत् । न खलु सकललोकलोचनानन्द-करः शीतकरः शङ्करशिरःशयालोः कलानिधेरपरं तत्त्वम् । प्रकाशम् । राजर्षे स एष सौन्दर्यातिशयस्य महिमा ।

80 जनकः । कः पुनराभ्यां पुत्रवतां मौलिमाणिक्यतामारोपितः ।

81 विश्वा० ।

किं शीतांशुमरीचयः किमु सुरस्रोतस्विनीवीचयः
किंवा केतकसूचयः किमथवा चन्द्रोपलानां चयः ।
इत्थं जातकुतूहलाभिरभितः सानन्दमालोकिताः
कान्ताभिस्त्रिदिवौकसां दिशि दिशि क्रीडन्ति यत्कीर्तयः ॥२३॥

82 रामः । वत्स नूनमयं सकलगुणावदातस्तातः प्रस्तूयते ।

83 लक्ष्मणः । अपि नाम भूयोऽपि प्रस्तोष्यते ।

84 विश्वा० । अपि च ।

यस्योद्यद्भुजदण्डचण्डिमचलत्कोदण्डलीलायिते-
र्निष्पीते दनुजेन्द्रचन्द्रवदनाभ्रूवल्लरीविभ्रमे ।

---

रसवक्रथापथातीतः. D. जने for रमे & °पदवीं सा गतवतीं.

79. C. E. F. इदम् for एतत्. A. om. शीतकरः & कलानिधेः, & reads अपरत्वम्. B. om. सः. C. E. F. °शयमहिमा.

80. A. B. G. om. °ताम्. B. आसादित°.

82. B. om. वत्स. C. D. E. F. add स्फीत. after °दातः. C. E. F. स्तूयते.

84 A. B. om. अपि च. D. लसत् & G. वलत् for चलत्. A. निष्पन्दैः & विभ्रमैः. B, G. have अपि च be-

लक्ष्मीमस्त्रविपाटलक्षतमयीमालम्बते केवलं
पौलोमीकरजाङ्कुरव्यतिकरादाखण्डलीयं वपुः ॥ २४ ॥

तस्य पद्मवनबान्धववंशो-
त्तंसमांसलमहामणिमौलेः ।
कायकान्तिपरिभूतमनोजौ
ताविमौ दशरथस्य तनूजौ ॥ २५ ॥

85 जनकः । सहर्षम् ।

यद्बाहू वहतः पराक्रमहतां प्रत्यर्थिसीमन्तिनी-
चक्षुःकज्जलकालिकामिव धनुर्मौर्वीकिणश्यामिकाम् ।
यद्दोर्दुर्मदकर्मकार्मुकगुणप्रोत्तालकोलाहलै-
र्वैरिस्त्रीकलमेखलाकलकलाः पीता इवास्तं गताः ॥ २६ ॥

अपि च ।

यस्येन्द्रारिजयश्रिया सह झटित्याकृष्य मौर्वीलतां
साकं भूवलयेन चापवलयं दोर्मण्डले बिभ्रति ।
पौलोमीकुचकुम्भसीमनि रहः पश्यन्नखाङ्कं नवं
धत्ते चेतसि केवलं न तु करे कोदण्डमाखण्डलः ॥ २७ ॥

तपनकुलशिरःकिरीटकोटि-
स्फुरदरुणोत्पलकुड्मलस्य तस्य ।
दशरथनृपतेरिमौ मृगाङ्क-
प्रतिमसुरेखमुखाम्बुजौ तनूजौ ॥ २८ ॥

---

fore stanza 25 G. कुमारौ for तनूजौ.

85. D. अवतः for वहतः & °भृ-तास् for °हताम्. A. तीव्र for कर्म, and इह for इन्द्र. C. D. E. उपल for उत्पल. B. मृगाङ्क°.

86 विश्वा० । अथ किम् ।

87 जनकः । अहो धन्यता दशरथस्य यस्य द्वे अपि तनयावलोकनशीतले दृशौ ।

88 शता० । दिशौ च ।

89 विश्वा० । ननु दिश इति वक्तव्यम् ।

90 जनकः । तत्किमन्यावपि कुमारौ दशरथस्याङ्कं विभूषयतः ।

91 विश्वा० । अथ किम् । यौ खलु भरतशत्रुघ्नौ प्रतिबिम्बाविव रामलक्ष्मणयोः ।

92 शता० । नूनममी ऋष्यशृङ्गचरुभागानां विलासाः ।

93 जनकः । दशरथभागधेयानां च ।

94 विश्वा० । एवमेतत् । अवधिः खलु भाग्यवतां राजा दशरथः ।

95 जनकः । माहात्म्यवतां च ।

96 विश्वा० । तत्किमस्माभिरुच्यते । भवतोर्महिम्नि भवन्तावेव साक्षिणौ ।

97 जनकः । कतरोऽहं दशरथस्य महिमाभोगमनुभवितुं कासार इव सागरस्य ।

---

87. A. D. आलोकन. D. ° शीले.
88. D वा for च.
89. C. D. E F. om. ननु.
90. G. शतानन्द for जनक. A. om. अङ्कं...यतः. B. D. G. om. वि.
91. D. om. किम्. C. E. किल for खलु.
92. D. ननु for नूनम्.
93. B. °रथस्य. A. om. च.
94. F. om. एवमेतत्.
95. C. D. E. F. महात्मनाम् & G. महात्म्यवताम्.
96. C. E. F. कथम् for किम्. G. उच्यताम्.
97. D. °रथमहिमा. A. महिमानम्.

98 विश्वा० । शोभन्त एव विनयमधुराणामधरीकृतात्ममहिमानः कामं सत्यविधुरा अपि वाचः । अथवा समुचितमेवैतत् । यतः

जज्ञिवान्दशरथः स हि राजा
राममिन्दुमिव सुन्दरमूर्तिम् ।
लोकलोचनविगाहनशीतां
त्वं पुनः कुमुदिनीमिव सीताम् ॥ २९ ॥

99 लक्ष्मणः । अपवार्य । आर्य इन्दुकुमुदिनीदृष्टान्तेन किमपि संविधानं सूचितं भगवता ।

100 रामः । सप्रणयकोपम् । अलमलीकजल्पितेन ।

101 जनकः । स्वगतम् । कथमनया भङ्ग्या किमपि सूचितं मुनिना । तत्किमनेन रभसवशंवदेन विस्मृतमेव शाम्भवं धनुः । प्रकाशम् । भगवन् अनेन भवतो वक्रकमनीयेन वाग्विलासेन द्वितीयेनेव हरकार्मुकेण किमपि कौतुकितोऽस्मि ।

102 विश्वा० । स्वगतम् । कथमनया परिपाट्या हरचापारोपणमुद्भावयति । भवतु । प्रकाशम् । राजर्षे साधु स्मारितोऽस्मि । अस्ति हि मे

---

98. B. राजर्षे before शोभन्ते. A om. विनय. A. B. असत्य. C. E. F. om. एव. A. om. यतः. A. B. गात्र for मूर्ति. F. कोक for लोक. B. G. शीलाम् for शीताम्,

99. A. om. अपवार्य. C. E. om. अपि. A. संविधानम्, B. सविधानमुक्तम्, & C. E. F. अभिहितम् for सं...चितम्.

100. A. G. आलापितया & B. D. आलापतया.

101. B. एतेन. A. आवेशवशेन. All except A. have भगवतः. D. om. इव. A. om. किमपि.

102. A. C. E. F. परिपाटिकया. A. om. भवतु. A. B. D. G. अतीव for अस्ति. B. G. om. हि. B. D. G. वृषभ. A. B. आलोकने. B. om.

कौतुकं वृषकेतुकार्मुकावलोकने । तेन तदानयनार्थमादिश्यन्तां पुरुषाः । अथवा किमन्यैः । रामभद्र एवादिश्यते ।

103 जनकः । सविस्मयम् । भगवन् कथं मुग्ध इव दुग्धमुखमपि रामं मुग्धेन्दुकिरीटकार्मुकानयनार्थमादिशसि । न जानासि किम् ।

एतत्तद्दुर्विगाहं तुहिनगिरिमयं कार्मुकं यत्र जज्ञे
मौर्वीदर्वीकराणां पतिरुदधिसुतानायकः सायकश्च ।
दोर्दण्डैश्चन्द्रमौलेर्नतमपि यदभूदुन्नतं कार्मुकाणां
बाष्पाम्भोवृष्टये च त्रिपुरमृगदृशामैशमप्यैन्द्रमासीत् ॥३०॥

104 विश्वा० । जानामि ।

सेवायातसमस्तखेचरकरक्रीडाचलच्चामर-
श्रेणीमारुतपानपीननिबिडज्यापन्नगाकर्षिणा ।
गाढाकुञ्चनजृम्भमाणतुहिनस्यन्दैर्यदीयैः श्रमः
संत्यक्तः पुरवैरिणापि तदिदं शैलेन्द्रसारं धनुः ॥ ३१ ॥

105 जनकः । तत्कथमस्यानयनाय राममादिशसि ।

106 विश्वा० । न केवलमानयनाय । किन्त्वानमनाय च । रामं प्रति । वत्स बध्यतां परिकरः । इदं च

मारीचमारीचतुरं सुबाहोरपबर्हणम् ।
न्यस्यतां लक्ष्मणकरे ताडकाताडनं धनुः ॥ ३२ ॥

---

तेन. F. ततः after तेन. D. तदीय for तत्. D. G. आनयनाय. A. B. D. G. आदिश्यताम्.

103. D. om. भगवन्...किम्. F. om. मुग्ध इव. B. अर्ध for मुग्ध which G. om. B. मौलि for किरीट. A. om. न जानासि. A. सृष्टये for वृष्टये.

104. A. कुञ्चित & B. कर्षण for कुञ्चन. A. यदीयः & D. F. यदीय°.

105. G. रामाय.

106. C. E. F. अपि for किम्. D. om. किन्तु. A G. om. च. A. D. मार for मारी. A. B. D. वाहनम् & G. वारणम् for बर्हणम्.

107 जनकः । भगवन् कथमसंभावनीयमेवोद्भावयसि ।

108 विश्वा० । कथमिदं न विदितं ते । अनेन हि

प्राप्य चापनिगमानितः क्रमा
त्संप्रताप्य विशिखैर्निशाचरान् ।
अस्मदीयमखरक्षणक्रिया
दक्षिणेन गुरुदक्षिणीकृता ॥ ३३ ॥

109 जनकः । विमृश्य निश्वस्य च । भगवन् अस्त्वेतत् । किन्तु

मारीचमुख्यरजनीचरचक्रचूडा-
चञ्चन्मरीचिचयचुम्बितपादपीठः ।
अत्राभवद्विफलबाहुबलावलेपो
वीरः शशाङ्कमुकुटाचलचालनोऽपि ॥ ३४ ॥

110 विश्वा० । किमेतावता । नन्वत एव राममादिशामि । रामं प्रति । वत्स उत्तिष्ठ । कुमुदिनीकान्तकलाकिरीटकार्मुकारोपणप्रवीणतया प्रीणयास्मान् ।

111 जनकः । स्वगतम् ।

यस्य ख्याता जगति सकले निस्तमिस्रा तपःश्री-
र्मिथ्योत्कण्ठः कथमिव भवेदेष गाधेस्तनूजः ।
बालो रामः किमपि गहनं कार्मुकं चन्द्रमौले-
र्दोलारोहं कलयति मुहुस्तेन मे चित्तवृत्तिः ॥ ३५ ॥

---

107. G. om. भगवन्. F. om. एव for which A. B. इव.

108. A. अविदितम्. B. om. ते. G. °दक्षतैव.

109. A. D. G. अस्ति & B. एवम् for अस्तु. D. लता for बल.

110. A. इमम् for अतः. D. उत्तिष्ठ वत्स. C. E. F. °रोपणे. B. D G. संप्रीणय.

111. D. G. इह for इव. A. °खेलम् for °रोहम्. A. आलोक्य.

पुनः पृथिवीमालोक्य ।

रतिरिव जननेत्रानन्दिनी नन्दिनी ते
कुसुमशर इवायं रूपसारः कुमारः ।
यदि च धनुरपीदं प्राप्तमेतस्य हस्तं
कुसुमचयमिव स्यात्संभृतः संप्रदायः ॥ ३६ ॥

112 शता० । राजर्षे किमेतन्मूढ इव मुहुर्मुहुरालोकसे । अनुवर्तस्व महर्षेर्वचनम् ।

113 जनकः । प्रकाशम् । अनुवृत्तमेव । रामं प्रति । वत्स अनुष्ठीयतां गुरुवचनम् ।

114 रामः । उत्थाय परिकरं बध्नाति ।

115 प्रविश्य प्रतीहारी । जेदु जेदु देवो । कोवि बम्हणो देवस्स दंसणत्थी दुआरदेसम्मि वट्टदि । ता किं पवेसीअदु ।

116 जनकः । आः इदमपि किं जनकः प्रष्टव्यः ।

117 प्रती० । तह । इति निर्गत्य तेन सह प्रविशति ।

118 जनकः । ब्रह्मन् प्रणम्यते ।

119 मुनिः । राजन् सुमतिर्भूयाः ।

---

115 जयतु जयतु देवः । कोऽपि ब्राह्मणो देवस्य दर्शनार्थी द्वारदेशे वर्तते । तत्किं प्रवेश्यताम् ।

---

G. तु for च. B. चय for मय. C. E. F. इदम् for इव.

112. A. om. मूढ इव मुहुः. D. अवलोकसे.

113. A B. अनुमतम्.

115. A. B. om. जेदु ...देवो. C. D. om. जेदु. D. दुआरोम्मि.

116. A. om. आः. C. E. F. put किम् last. A. प्रवेष्टव्यः for जन ...व्यः.

117. A. B. om. तह । इति. A. निर्वर्त्य.

118. A. प्रणम्यते.

120 जनकः। स्वगतम्। अन्यादृशीयमाशीःपरिपाटी। भवतु। प्रकाशम्। मुने इहास्यताम्।

121 मुनिः। संदेशहरः खल्वस्मि।

122 जनकः। कस्यायं कीदृशो वा संदेशः।

123 मुनिः।

पीत्वा कज्जलकालकूटमखिलक्ष्मापालनारीदृशां
नीत्वा स्फीतयशोऽट्टहाससमहसा लोकत्रयीं शुभ्रताम्।
चण्डीशं चरितैकदेशविभवैरद्यापि यः सेवते
हे वैदेह स जामदग्न्यपरशुस्त्वामेतदाभाषते ॥ ३७ ॥

124 जनकः। स्वगतम्। अहो गर्वाङ्कुरस्य वक्रता। भवतु। प्रकाशम्। किं तत्।

125 मुनिः।

कस्मैचिद्देहि कन्यां नरपतिशिशवे दीर्घमायुर्लभस्व
व्यावर्तस्वाप्रियान्नः पुरमथनधनुःकर्षणालापपापात्।
नो चेदेकोऽभ्युपायस्तव कलुषमषीपङ्कसंक्षालनाया-
मस्मद्विस्तारिधाराञ्चलबहलपयःपूरदूरावगाहः ॥ ३८ ॥

126 जनकः। विहस्य। तन्ममापि प्रतिसंदेशः कथनीयस्तस्य।

---

120. A. puts अथ & B. कथम् before अन्या°. A. अन्यादृशा. A. B. महर्षे for मुने. B. om. इह.

121. F. °हारः & om. खल्वास्मि.

122. D. om. कस्य. C. E. F. om. कस्यायम् & have असौ for वा.

123. B. G. कालिमानम्. B. F. G. अखिलम्. A. °दृशोः. A. B. G. लोकत्रयम्. C. भूभृताम् & G. शुभ्यताम् for शुभ्रताम्. A. B. G. चरितैरनेक°.

124. C. E. F. add मुने before किम्.

125. A. कनकपरिवृताम् for नर...शवे. A. B. G. अन्योऽस्त्युपायः. D. क्षालनार्थम् & F. °नाय. A. धारा for दूर.

126. B. G मया for मम. A. om. तस्य for which D. चास्य.

127 मुनिः । कीदृशोऽसौ ।

128 जनकः ।

त्वं मित्रं मम जामदग्न्यपरशो तेनैतदाभाष्यसे
संप्रत्येव यथाप्रतिश्रुतमियं कन्या मया दीयते ।
तेनेह स्वयमेत्य धूर्जटिधनुर्धौरेयदोःसंपदो
जामातुः पुरतश्चिराय भवता धाराजलं त्यज्यताम् ॥ ३९ ॥

129 मुनिः । तथास्तु । इति निष्क्रान्तः ।

130 जनकः । आङ्गिरस उपक्षिप्तस्तावदयं जामदग्न्येन निजकोपानलविस्फुलिङ्गः ।

131 शता० । किमेतावता । अतिगम्भीरभुजसारकासारकैरवारामः खलु रामः ।

132 विश्वा० । राजर्षे के पुनरमी परितः स्फुरन्मणिमौलयः परःसहस्रा दृश्यन्ते ।

133 जनकः ।

श्रीकण्ठकार्मुकनिरस्तभुजावलेपा
नानादिगन्तजगतीपतयः किलामी ।
अभ्यर्थनां मम किमप्यनुवर्तमाना
गृह्णन्ति कानिचिदहानि नरेन्द्रपूजाम् ॥ ४० ॥

134 विश्वा० । वत्स राम तदेषामेव पश्यतां कौतुकमस्माकं पूरय ।

---

127. D. om. असौ.
128. D. येन for तेन. A. C. E. F. भाषसे. A. B. मुच्यताम्.
129. F. om. मुनिः.
130. B. अग्नि. D. G. स्फुलिङ्ग.
131. A. om. सार & खलु रामः.
132. D. इत; for अमी & om. परितः for which A. स्फुरन्तः. D. om. मणि. A. अन्ये, D. परःसहस्रम्, & F. °हस्राम्.
133. A. अभ्यर्थनम्. B. G. अभिवर्त°.
134. G. रामभद्र. A. यत् for तत्.

135 रामः । विश्वामित्रं प्रणम्य निष्क्रान्तः ।

136 जनकः । आङ्गिरस अपरिशीलितसंनिवेशस्य वत्सरामस्य भवता प्रत्यनन्तरीभूयताम् । आदिश्यतां च कञ्चुकी करकलितकमल-मालाया जानक्याः स्वयंवराङ्गणावतरणाय ।

137 शता० । तथास्तु । इति निष्क्रान्तः ।

138 प्रविश्य कञ्चुकी । जयतु जयतु देवः । अनुष्ठित एव देवादेशः ।

139 विश्वा० । विलोक्य सहर्षम् । कथमुद्गतमेव रामभद्रयशःपताकाकेतु-दण्डेन हरकोदण्डेन । पुनः सविस्मयम् । अये

राघवेण शिशुनापि किलायं
लीलयैव नमितो हरचापः ।
दूरमुल्लसति यस्य समन्ता-
दम्बरेऽपि गमितो गुणघोषः ॥ ४१ ॥

140 लक्ष्मणः । भगवन् एवमेतत् । तथा हि

पूर्णा एव पुरारिचापकपटच्छन्नाचलग्रामणी-
गूढानेकगुहागभीरकुहरस्फारप्रतिध्वानिनीः ।
मौर्वीभूतभुजङ्गराजवदनश्रेणीविसर्पद्वचः-
प्रारब्धारियशःप्रशस्तिसहितैर्ज्याघातघोषैर्दिशः ॥ ४२ ॥

---

135. F. मुनिम्.

136. D. अपरिचितनिवेशनस्य & om. भवता. F. om च which D G. put after कञ्चुकी. A. om. कञ्चुकी .. नक्याः. F. °मालया. C. E. F. वीरस्वय°. A. om. अङ्गण.

137. D. om. अस्तु.

138. B. om. प्रविश्य. A. B. om. जय ... देवः. C. जय जय देव. D. G. om. जयतु.

139. D. G. आः before कथम्. A. उद्भूत. A. D. G. रामचन्द्र. D. मण्डलेन for दण्डेन. A. C. E. om. हरकोदण्डेन after which D. सह. B. अद्य for अपि.

140. C. स्वान for स्फार. B. G. सदृशैः for सहितैः.

141 जनकः । किमुच्यते दिशः पूर्णा इति । ननु

एतैः श्रीकण्ठकोदण्डचञ्चन्मौर्वीभवै रवैः ।
चिरात्प्रतिज्ञया साकं पूर्णो मम मनोरथः ॥ ४३ ॥

142 प्रती० । कञ्चुकिनं प्रति । अज्ज पेक्ख पेक्ख कोदूहलम् । सीतारामेहिं मिलिअ उण हरचावारोवणं समग्गीकरीअदि ।

143 कञ्चुकी । सकौतुकम् । कथमिव । विमृश्य विहस्य च । आ ज्ञातम् ।

करकिसलयलीलाचारुचण्डीशचापे
दशरथतनयेन स्वैरमाकृष्यमाणे ।
रभसरसविकासी सीतया पुङ्खितोऽसौ
कुवलयदलदामश्यामकान्तिः कटाक्षः ॥ ४४ ॥

144 लक्ष्मणः । भगवन् अत्यद्भुतं वर्तते । नन्वयम्

भिन्दन्निद्रां मुरारेः सकलभुजभृतां चालयञ्शौर्यदर्पं
छिन्दन्दिक्कुम्भिकर्णाञ्चलचलनकलां कम्पयन्कूर्मराजम् ।
आर्यश्लाघागभीरः प्रलयजलधरध्वानधिक्कारधीर-
ष्टङ्कारः कृष्यमाणत्रिपुरहरधनुर्भङ्गभूरास्ते ॥ ४५ ॥

---

142 आर्य प्रेक्षस्व प्रेक्षस्व कौतूहलम् । सीतारामाभ्यां मिलित्वा पुनर्हरचापारोपणं समग्रीक्रियते ।

---

141. A. B. G. आः before किम्. A. B. इदमालप्यते for उच्यते. D. तथा before ननु & स्वरैः for रवैः. C. E. F. मम पूर्णो.

142. D. om. कञ्चुकिनं प्रति A. om. पेक्ख. D. °कडक्खेहिं for °रामेहिं & °रोवणसामग्गी.

143. C. E. om. च. A. B. om. आ. A. सरभसमावि°. G. रससरसवि°. A. प्रोषित for पुङ्खित. A. D. अयम् for असौ.

144 A. स्थापयन् शौर्यदेवीम् G. म्लानयन्. C. E F. °वलन° for °चलन°. A. B. D. G. अस्ति for आस्ते.

145 प्रती॰ ।

तेल्लोक्कं लङ्घन्तो गिरिगहिरगुहामुत्तगज्जन्तसिंह-
प्फारुम्मिल्लन्तकण्ठत्थणिदपडिरवुग्गारपूरिज्जमाणे ।
बम्हण्डे भज्जमाणे कडुविहडकडक्कारपब्भारभीमो
अम्मो भज्जन्तचण्डीसरधणुहट्टणक्कारओ उग्गमेइ ॥ ४६ ॥

146 कञ्चुकी । पश्य कौतुकम् ।

क्रीडाभग्नमृगाङ्कमौलिधनुषं सीतार्पितां वक्षसा
बिभ्राणं कमलस्रजं निजगृहं शृङ्गारवीरश्रियोः ।
रामं व्रीडवशादवाञ्चितमुखं भूमीभुजां पश्यतां
चेतः क्रोधविषादविस्मयमुदामूर्मीः समालिङ्गति ॥ ४७ ॥

147 प्रविश्य शतानन्दः । राजर्षे विषीद वा प्रसीद वा । इदं यथादृष्टमुपवर्ण्यते ।

ज्यावल्लीं ललिताङ्गुलीकिसलयैराकर्णमाकर्षतो
न भ्रूभङ्गुरतां गता रघुशिशोर्भग्नं धनुर्धूर्जटेः ।

---

145 त्रैलोक्यं लङ्घयन् गिरिगभीरगुहासुप्तगर्जत्सिंह-
स्फारोन्मीलत्कण्ठस्तनितप्रतिरवोद्गारपूर्यमाणे ।
ब्रह्माण्डे भज्यमाने कटुविघटकडक्कारप्राग्भारभीम
अहो भज्यमानचण्डीश्वरधनुष्टणत्कारक उद्गच्छति ॥

---

145. B D. तिल्लोक्कम. E. कुहर for गहिर. A. G जग्गन्त. D. बहु for कडु. A. वियण & G. विडभ for विहड. F. ठणक्कार. A. कणक्कार & B. F. रणक्कार. D. डंडं भमेइ for °ओ उग्गमेइ.

146. D. परमम् for पश्य. C. E. F. पश्य पश्य कौतूहलम्. A. B. भूमिम् & D. ऊर्मीः for ऊर्मीः.

147. A. om. प्रविश्य. A. B. om. इदम्. D. तु before यथा°. A. अ-

नाहङ्कारतरङ्गितो ध्वनिरभूत्कण्ठेऽस्य दीर्यद्धनु-
ष्टङ्कारस्तु चकार तारतरलः शब्दाद्वितीयं जगत् ॥ ४८ ॥

148 जनकः । कथं पुनरेतावतीमतिभूमिमवगाहमानोऽपि वत्सो भवता न निवारितः ।

149 शता० । कथंकारं वारयामः ।

यावत्कन्दुकलाञ्छनाङ्कितकरः शोणाञ्जनालाकृतिः
कौसल्यार्पितमङ्गलप्रतिसरो वत्सस्य दोःकन्दलः ।
किञ्चिच्चञ्चति तावदेव हि दलच्चण्डीशचापोच्छल-
च्छब्दैकार्णवमग्नमेतदखिलं जातं त्रिलोकीतलम् ॥ ४९ ॥

150 जनकः । तदलं कालातिपातेन । याच्यतामनुमतिर्भगवतो विश्वामित्रस्य जानकीरामभद्रयोः पाणिसंघट्टनाय ।

151 शता० ।

सन्धौ विघट्टमानेन धनुषैव पिनाकिनः ।
ननु संघट्टितौ पाणी जानकीरामभद्रयोः ॥ ५० ॥

तदूर्मिलालक्ष्मणयोरेव पाणिसंघट्टनाय भगवानभ्यर्थनीयः ।

---

स्मर्यीयम् & B. अस्य शीर्यत्. A. C. E. F. शब्दाद्वितीयम्.

148. All except D. G. om. पुनः. C. E. F. °लम्बमान. A. C E. om. अपि. A. B. रामचन्द्रः & G. रामभद्रः after वत्सः. All except D. G. put अपि after भवता. D. om. न.

149. D. वारयामि. B. G. आञ्चित. C. E F. रामस्य for वत्सस्य. A. चलत् for दलत् & त्रिलोकीमयम्.

150. All except G. put तत् before याच्यताम्. B. C. वाच्यताम् A. मतिः only.

151. A. B. सम्यक् & D. G. सद्यः for सन्धौ. A. B. सम् for नि. A. अपि for एव. D. एव after °घटनाय. A. B. स भगवान्.

152 विश्वा० । विहस्य । अस्त्वेतत् । परं तु

पाणीञ्जनककन्यानां पीडयद्भिः सहानुजैः ।
सीताया रामभद्रो मे पाणिपीडनमिच्छति ॥ ९१ ॥

153 जनकः । सहर्षम् । कथं माण्डवीश्रुतकीर्तिभ्यां भरतशत्रुघ्नयोरपि परिणयमनुसन्धत्ते भगवान् ।

154 विश्वा० । अथ किम् ।

155 जनकः । तद्गृहीतमिदमधिशेखरमाज्ञाकुसुमं भगवतः । तदागच्छत । समीहितं निष्पादयामः ।

इति निष्क्रान्ताः सर्वे ।

तृतीयोऽङ्कः ।

---

152. A. om. परं तु. B. om. तु. C. F. सीतया. D. पाणिग्रहणम्.

153. A. om. कथम्. A. C. E. F. om. अपि. C. E. F. अभि for अनु.

155. A. B. put इदम् after °शिखरम्. B. संपादयामः for तत्...यामः. A. C. E. F. तदेहि. D. तदागच्छ. A. समीहितोपसंपदं पादयामः for समी...यामः.

# ॥ चतुर्थोऽङ्कः ॥

1 नेपथ्ये ध्रुवा गीयते ।

मणिमअमङ्गलदीवो जणअणरेन्दस्स मण्डवे जलइ ।
चण्डानिलोवि पत्तो जस्सिं विहलागमो होइ ॥ १ ॥

2 पुनर्नेपथ्ये ।

अरे क्षत्रिया अपसरत लोचनपथात् । नन्वयम्

कुर्वन्कोपाद्दुदञ्चद्भ्रविकिरणसटापाटलैर्दृष्टिपातै-
र्द्यापि क्षत्रकण्ठच्युतरुधिरसरित्सिक्तधारं कुठारम् ।
तीव्रैर्निश्वासवातैः पुनरपि भुवनोत्पातमासूचयद्भि-
र्गर्जन्मौर्वीकचापस्त्रिभुवनविजयी जामदग्न्यः समेति ॥ २ ॥

ततः प्रविशति जामदग्न्यः ।

3 जामदग्न्यः । साटोपं परिक्रम्य । अहो धृष्टता जनकस्य यदयं हरचापारोपणेन कन्यादानं प्रतिजानीते । परशुं विलोक्य ।

सकलनृपकठोरकण्ठपीठी-
बहलगलद्रुधिरौघधौतधारः ।

---

1 मणिमयमङ्गलदीपो जनकनरेन्द्रस्य मण्डपे ज्वलति ।
चण्डानिलोऽपि प्राप्तो यस्मिन्विफलागमो भवति ॥

---

1. A. B. मङ्गलध्रुवा. D. पउत्तो for वि पत्तो.

2. A. क्षत्रिय अपसर. A. B. G. पातैः & D. पीनैः for वातैः. A. सूत्रयद्भिः. A. मौर्वीश & F. मौर्व्यैक. A. °विजयो.

3. All except A. om. जामदग्न्यः. D. अवलोक्य. A. D. °कण्ठनाटी. A. घोर for धौत & पतित: for क्षत.

तदिदमजनकं जगद्विधत्ते

परशुरयं जमदग्निनन्दनस्य ॥ ३ ॥

विमृश्य ।

उदितोऽर्जुनभुजविपिने ज्वलितस्तुङ्गेषु नृपतिवंशेषु ।

निमिकुलकलमपलालं कोपानल किं पुनः स्पृशसि ॥ ४ ॥

पुनर्विचिन्त्य । अथ बालमस्मिन्नुपेक्षया । मनोरथोपनीतजामातृभुजबलावलेपदुर्ललितः खल्वसौ । तथा हि संदिष्टमनेनास्मत्परशोः ।

त्वं मित्रमित्यादि पठति । अहो अस्य दुरवलेपः ।

यस्योद्यद्घोरधाराज्वलदलितगलद्वृहुशाखासहस्र-

प्रोद्गच्छद्रक्तधारानिवहजितनरोन्मीलदर्कांशुजालः ।

क्ष्मापालः कार्तवीर्यः सुरपुरसुदृशां पुष्पिताशोकशाखि-

भ्रान्तिं दत्त्वापि चित्ते निजपुरसुदृशां शोकशाखीबभूव ॥ ५ ॥

अपि च ।

येनाबध्यत नर्मदाम्बुनिवहः सङ्ख्ये च लङ्केश्वर-

स्तद्यस्मिन्निरमज्जदर्जुनभुजक्षोणीरुहां मण्डलम् ।

क्षत्रस्त्रीनयनाम्बुपूरमिषतः खेलन्ति यत्केलय-

स्तत्तादृक्परशुर्ममायमधुना धाराजलं मुञ्चति ॥ ६ ॥

विलोक्य । कथमयं शतानन्दशिष्यस्ताण्ड्यायनः ।

---

लित°. D C. °कमल° & G. °कला-पम्. A. °नलः...स्पृशति. A. विमृश्य D. G. om. अथ वा. A. अवलेपात्. G. अयम् for असौ. D. om. तथा हि. A, मम after मित्रम्. B. om. आदि. F. पूर्वश्लोकस्थम् before पठति. A. हति for जित. C. E. F. अन्यच्च for अपि च which D. om. F. कीर्तयः for केलयः.

4 प्रविश्य ताण्ड्यायनः । भगवन् अभिवादये ।

5 जाम० । आयुष्मान् भूयाः । कथय तावदपिनाम भवदुपाध्याययजमानस्य निवृत्ता हरचापारोपणश्रद्धा ।

6 ताण्ड्या० । निवृत्ता ।

7 जाम० । सहर्षम् । निवृत्ता ।

8 ताण्ड्या० । भगवन् निवृत्ता सहैव चापेन ।

9 जाम० । ससंभ्रमम् । किमात्थ सहैव चापेन निवृत्तेति ।

10 ताण्ड्या० । अथ किम् ।

11 जाम० । स्फुटं तावत्कथय किं वृत्तमिति ।

12 ताण्ड्या० । कस्यचित्

अखण्डचण्डिमोद्दण्डभुजदण्डनिपीडितम् ।
भगवन् भृगुमार्तण्ड भग्नं भर्गशरासनम् ॥ ७ ॥

13 जाम० । सक्रोधम् । कस्य ।

14 ताण्ड्या० ।

सुबाहुमारीचपुरःसरा अमी
निशाचराः कौशिकयज्ञघातिनः ।
वशे स्थिता यस्य—

---

4. A. B. D. om प्रविश्य.

5. C. om. जामदग्न्य.. A. B. अये before आयु°. C. E. F. तव for भवत्.

6. D. om. this speech and the next.

8. A. B. किन्तु after निवृत्ता. A. हरचापेन सह B. इति after चापेन.

9. A. रे किमात्थ रे, B. रे किमात्थ, & F. रे after किमात्थ. A. हरचापेन.

11. G. कथय तावत्. A. om. 11 & 12.

13. B. सरोषम्.

15 जाम॰ । सक्रोधम् । अलमतः परम् । ज्ञातः खलु खलानामग्रणीर्निशाचरग्रामणीः ।

16 ताण्ड्या॰ । स्वगतम् । कथं दशकण्ठेन धनुर्भग्नमिति ज्ञातं भगवता । भवतु तावत् ।

17 जाम॰ । सक्रोधम् । अयमयमिदानीम्

नृपशतसुकुमारकण्ठनाली-
दलनकलाकुशलः परश्वधो मे ।
दशवदनकठोरकण्ठपीठी-
कदनविनोदविदग्धतां दधातु ॥ ८ ॥

विमृश्य । अथ वा

यः कृत्वार्जुनभूरुहाद्भुतभुजाशाखासहस्रच्छिदां
दम्भोलेर्गिरिकूटपाटनपटोः शौण्डीर्यतो लज्जते ।
तस्यैतस्य परेतराजसदनद्वारः कुठारस्य मे
का श्लाघा दशकण्ठकण्ठकदलीकाण्डावलीखण्डने ॥ ९ ॥

पुनर्विमृश्य । तथाप्यनुचितमुदासितुमेतस्मिन्कृतागसि रक्षसि । तदिदानीम्

---

15. All except A. B. om. सक्रोधम्. D. खलाग्रणीः.
16. A. B. भगवता प्रतीतम् which G. transposes. C. D. E. F. om. भवतु तावत्. B. भग्नं तु before तावत्.
17. B. कल for दात. C. कदन for दलन. D. पाटी for पीठी. A. दधाति. A. B. G. कर्ता for कृत्वा. D. शौण्डीर्यमालम्बते. B. छेदने for खण्डने. All except B. have विचिन्त्य. A. om. उदासितुम्. A. B. अस्मिन्.

दक्षिणस्याम्बुधेर्मध्ये कृत्वा कोङ्कणमष्टमम् ।
मद्बाणजन्मा दहनो लङ्कातङ्काय जायताम् ॥ १० ॥

इति साटोपं परिक्रामति ।

18 ताण्ड्या० । स्वगतम् । दिष्ट्या स्वस्ति क्षात्रियकुलाय ।

19 नेपथ्ये । अहो नियोगिनः कृतविवाहमङ्गलयोः सीतारामचन्द्रयोः स्वस्तिवाचनिका द्विजन्मान आहूयन्ताम् ।

20 जाम० । परिवृत्य सक्रोधम् । आः ब्रह्मबन्धो कथमलीकदशकण्ठकीर्तिदानेन प्रतारितोऽस्मि । नन्वयमन्यः कोऽपि जनकजामाता ।

21 ताण्ड्या० । भगवन् मम कोऽपराधः । अर्धोक्त एव भगवता भ्रान्तं संभ्रान्तं च ।

22 जाम० । तन्निःशेषं तावत्कथय ।

23 ताण्ड्या० ।

सुबाहुमारीचपुरःसरा अमी
निशाचराः कौशिकयज्ञघातिनः ।
वशे स्थिता यस्य शराग्रवर्तिनः
प्रतापलेशस्य गताः पराभवम् ॥ ११ ॥

तस्यैव । अखण्डचण्डिमेत्यादि पठति ।

---

18. A. B. om. स्वगतम्.

19. A. °रामयोः. D. °रामभद्रयोः. D. G. द्विजाः. A. आह्वयताम्

20. D. om. परिवृत्य. B. सरोषम्. A. B. अलीकमेव. B. om. अयम्. A. B. D. एव after अन्यः. D. om. कोऽपि. A. जनकस्य.

21. G. वा after कः. A. भवता. B. G. मयापि after भ्रान्तम् & om. च. D. भ्रान्त्या भ्रान्तं च.

22. A. ननु शपेयं तत्कथय. B. ननु सविशेषम्. C. E. F. om. तत्.

23. A. B. D. G. do not repeat सुबाहु ...यस्य. B. G. तथा for तस्य.

24 जाम० । कः पुनरयं मारीचदमनः ।

25 ताण्ड्या० ।

ये ऋष्यशृङ्गचरुभागभुवः कुमाराः
संजज्ञिरे दशरथस्य वधूजनेन ।
तेषामयं निरुपमः प्रथमः कुमारो
रामाभिधः कुशिकराजतनूजाशिष्यः ॥ १२ ॥

26 जाम० । क्षणं विभाव्य सामर्षम् ।

दुर्धर्षाः सुरसिद्धकिन्नरनरैस्त्यक्तक्रमं वक्रता
प्राप्ते यत्र विधातरीव तरसा तिस्रोऽपि दग्धाः पुरः ।
तद्भग्नं यदि राघवेण शिशुना चण्डीपतेः कार्मुकम्

27 ताण्ड्या० । स्वगतम् । किमधुना वक्ष्यति ।

28 जाम० ।

तन्मग्नं कुलमेव तर्कय रघोर्मच्छस्त्रधाराम्भसि ॥ १३ ॥

29 ताण्ड्या० । संरब्धोऽयं भगवान् । तदिमं वृत्तान्तमुपाध्यायस्य कथयामि ।

इति निष्क्रान्तः ।

30 जाम० । विलोक्य । अभिनवविवाहमङ्गलतया तर्कयामि स एष रामः सहानुज इति । सहर्षं निर्वर्ण्य । अर्धमुग्धः खल्वयं जनो यदेनं काम इति वक्तव्ये राम इति जल्पति । पुनर्निर्वर्ण्य ।

---

25. A. बन्धुजनेभ्यः.
26. F. दुर्धर्षं. B. सिंह for सिद्ध. A. विधातुरिद्ध.
27. A. वक्ष्यते.
29. All except B. G. om. अयम्. A. B. खलु before भगवान्. G. तमिमम्. A. तदिदम्. A. B. वृत्तान्तजातम्.
30. A. D. G. सानुजः. A. om. इति & adds अये before अर्ध°; येने-

सौन्दर्यं मदनादपि प्रथयति प्रौढिप्रकर्षं पुरां
भेत्तारं मदनारिमप्यधरयत्युद्दामदोःक्रीडितम् ।
मुग्धत्वं मदनारिमौलिशशिनोऽप्युत्कर्षमालम्बते
मूर्तैस्तत्किमसौ रसैर्विरचितः शृङ्गारवीराद्भुतैः ॥ १४ ॥

ततः प्रविशतो रामलक्ष्मणौ ।

31 लक्ष्मणः । सकौतुकम् ।

मौर्वी धनुस्तनुरियं च बिभार्ति मौञ्जीं
बाणाः कुशाश्च विलसन्ति करे शिताग्राः ।
धारोज्ज्वलः परशुरेष कमण्डलुश्च
तद्वीरशान्तरसयोः किमयं विवर्तः ॥ १५ ॥

आर्य किं पुनरिदमग्रे ब्रह्मक्षत्रात्मकं चित्रमिव स्फुरति ।

32 रामः । वत्स न विदितं ते । नन्वयं स भगवान्भार्गवः

वेध्यं क्रौञ्चमहीधरस्य शिखरं देयं धरित्रीतलं
प्रत्यग्रक्षितिखण्डदण्डनविधिक्रीडाविधेयोऽम्बुधिः ।
जेयस्तारकसूदनो युधि करक्रीडत्कुठारस्य च
च्छेद्यं यस्य बभूव हैहयपतेरुद्दामदोःकाननम् ॥ १६ ॥

---

त्वम् ; om. सौन्दर्यं...प्र ; & has भ्रयति for °थयति. B. D. प्रौढ. C. E. मूर्तिः & विरचिता. A. B. तैः for तत्.

31. C. E. F. विलोक्य before सविस्मयम्. D. मौञ्जी. A. विकसन्ति. G. सिताग्राः. B. विपाकः & D. G. विकारः for विवर्तः. D. अयम् for इदम्. D. G. om. अग्रे for which C. has अये & which E. F. put after °त्मकम्. F. किम् before ब्रह्म°. A. adds कर्म & B. D. G. वर्ण after क्षत्र.

32. A. D. om. स. F. °विधेयाम्बुधेः. A. B. D. G. क्रीडा for क्रीडत्.

33 लक्ष्मणः । तर्हि विस्मयनीयशीलोऽयं भगवान् ।

34 रामः । विस्मयनीयशीलानां शिखामणिरिति वक्तव्यम् । अयं हि

एकः स्वर्णमहीधरां क्षितिमिमां स्वर्णैकशृङ्गीं यथा
गामेकां प्रतिपाद्य कश्यपमुनौ न स्वात्मने श्लाघते ।
किंच क्रौञ्चगिरिं गिरीशतनयव्याविद्धशक्तिक्षतं
विद्ध्वा बाणगणैरुदात्तहृदयो वैलक्ष्यमालम्बते ॥ १७ ॥

उभौ परिक्रामतः ।

35 रामः । अञ्जलिं बद्ध्वा । भगवन् भृगुकुलशिरःशेखरशिखण्डक एष सानुजस्य मे परमोन्नतिरमणीयपरिणामः प्रणामः ।

36 जाम० । समरविजयी भूयाः ।

37 रामः । भगवन् भृगुकुलमौलिमाणिक्य अनुगृहीतोऽस्मि ।

38 जाम० । स्वगतं सकरुणम् ।

रामे चन्द्राभिरामे विनयवति शिशौ किं प्रकुप्यातिमात्रं

विमृश्य सक्रोधम् ।

हुं चापं चन्द्रमौलेश्चपलमतिरसाविक्षुभञ्जं बभञ्ज ।

---

34. A. विस्मयशीलानाम् & om. हि. A. हेम & B. हैम for स्वर्ण in स्वर्णैक &c. A. B. D. G. °शृङ्गाम्. F. ° मुनेः. D. स्वात्मने. A. स्वात्मनि. B. D. G. °तनयस्याविद्ध°. B. बाणशतैः. G. उदार. C. E. F. इति before उभौ.

35. F. om. कुल. A. B. have °शिरःशिखण्ड. A. °खण्डेश for °खण्डक एष. B. सहानुजस्य & om. परिणाम.

36. A. B. वत्स राम before समरविजयी. A, om. समर.

37. F. इति at the end of the speech.

38. B. किम् for हुम् & °दण्डम् for °भञ्जम्. G. जनकनृप. D. ममा॰

पुनः सानुक्रोशम् ।

बाला वैधव्यदीक्षां जनकपतिसुता नार्हतीयं मदस्त्रात्

पुनर्विचिन्त्य सामर्षम् ।

आः शान्तोऽसौ कुठारः कथमयमधुना रेणुकाकण्ठशत्रुः॥ १८॥

प्रकाशम् । दाशरथे इयमसौ मे त्वयि समुदाचारानुसारिणी वाग्वृत्तिरेव ।

39 रामः । विहस्य । मनोवृत्तिस्तु कीदृशी ।

40 जाम० ।

चण्डीशकार्मुकविमर्दविवर्धमान-
दर्पावलेपसविशेषविकाशभाजोः ।
बाह्वोस्तवाहमधुना मधुना समानै-
राराधयामि रुधिरैः कठिनं कुठारम् ॥ १९ ॥

41 रामः । भगवन् निग्रहानुग्रहयोः स्वाधीनोऽयं जनः । परं ते कोपबीजं ज्ञातुमिच्छामि ।

42 जाम० । अहो दर्पान्धता यदात्मना कृतमस्माभिरुक्तमपि नावधारयति निजदुर्विनयम् । ननु रे

येनोपदिष्टमद्यापि पुरस्त्रीविरहव्रतम् ।
न भग्नं तत्त्वया भग्नं जगद्गुरुशरासनम् ॥ २० ॥

स्त्रात्. A. B. सरोषम्. C. E. F. श्रान्तः for शान्तः. A. D. अयम् & G. मे for असौ. A. om. मे before त्वयि. C. E. F. om. एव.

39. D. om. विहस्य.

40. A. विकर्ष for विमर्द. C. अवलेश. A. आप्याययामि.

41. All except B. G. om. परम्. A. तेन for ते & तु before ज्ञातुम्.

42. A. B. ते after अहो & अवधारयसि. A. येनोद्दिष्टमथाधापि. B. G. भुग्नम् for the first भग्नम्. D. न तु भग्नं त्वया &c.

43 रामः । भगवन् अलीकलोकवार्तया निरपराधे मयि मुधाकोपकलङ्कितोऽसि ।

44 जाम॰ । तत्किं स्वस्ति हरकार्मुकाय ।

45 रामः । नहि नहि ।

46 जाम॰ । तत्कथं निरपराधोऽसि ।

47 रामः ।

मया स्पृष्टं न वा स्पृष्टं कार्मुकं पुरवैरिणः ।
भगवन्नात्मनैवेदमभज्यत करोमि किम् ॥ २१ ॥

48 जाम॰ । आः कथं चन्दनदिग्धं नाराचं निधाय हृदयं मे शीतलयसि । तदलमनेन । कुठारमुद्यम्य ।

हे राम कामरिपुकार्मुकमर्मघात-
संजातपातक तवैष कठोरधारः ।
सीताकरव्यतिकरप्रतिबन्धबन्धुः
कण्ठं पुरा विशति निष्करुणः कुठारः ॥ २२ ॥

तत्प्रवीरो भव ।

49 रामः ।

हारः कण्ठं विशतु यदि वा तीक्ष्णधारः कुठारः
स्त्रीणां नेत्राण्यधिवसतु नः कज्जलं वा जलं वा ।

43. A. B. एव किमिति after मुधा.
44. D °कार्मुकस्य.
47. B. एतत् for इदम्.
48. A. B. रे after कथम्. A. निखाय. D. om. मे. C. D. E F. उद्गाह्य for उद्यम्य. F. °महाविधि° for °व्यतिकर°. G. प्रतिकूल & विशतु. B. कृपाणः for कुठारः. C. E. F. प्रतिवीरः.

49. F. कण्ठे. C. E. वा & F. परम् for नः.

संपश्यामो ध्रुवमिह सुखं प्रेतभर्तुर्मुखं वा
यद्वा तद्वा भवतु न वयं ब्राह्मणेषु प्रवीराः ॥ २३ ॥

50 जाम० । आः कथं मामपि प्रणतिपात्रं ब्राह्मणमात्रमिव मन्यसे । पुनः सामर्षम् ।

जानीषे न हि जामदग्न्यमपि रे यद्दीर्घदोःकन्दल-
द्वन्द्वास्कन्दितबाहुना रणभुवि स्कन्देन मन्दौजसा ।
नास्राक्षीद्भुजसंपदं मम कथं वक्त्रानुसारादिति
क्रुद्धेनोद्धतमैक्षि शङ्करकरन्यस्तं विधातुः शिरः ॥ २४ ॥

पुनः सामर्षम् । किमात्थ रे किमात्थ । न वयं ब्राह्मणेषु प्रवीरा इति । कथं क्षत्रियजातिगर्वितो ब्राह्मणजातिं तृणाय मन्यसे । तदिदानीमनयोः का गरीयसीति संग्रामतुलैव निर्णेष्यति ।

51 रामः ।

भो ब्रह्मन् भवता समं न घटते संग्रामवार्तापि नः
सर्वे हीनबला वयं बलवतां यूयं स्थिता मूर्धनि ।

52 लक्ष्मणः । जामदग्न्य एवमेतत् ।

यस्मादेकगुणं शरासनमिदं सुव्यक्तमुर्वीभुजा-
मस्माकं भवतां पुनर्नवगुणं यज्ञोपवीतं बलम् ॥ २५ ॥

---

50. F. om. कथम्. A. रे before माम्. B °पात्रमात्रं ब्राह्मणम् & C. E. °पात्रब्राह्मणमात्रम्. B. C. E. F. अन्यम् before इव. A. B. सरोषम्. A. जामदग्न्यपरशो & नोस्राक्षीत्. C. D. E. F. अस्राक्षीः. A. कथमयम्. F. पुनः for कथम्. A. शिरोब्राह्मण. (णम्), & om. पुनः सामर्षम् & adds रे after the second आत्थ. G. वीराः. B. °गर्वितोऽसि & इदम् for इदानीम्. A. B. D. G. आवयोः for अनयोः. All except A. B. निर्णेष्यते.

52. A. युष्माकं तु ततोऽधिकम् for अस्मा ... पुनः.

53 रामः । वत्स अलमिह माननीये मुनौ दुर्विनयवैदग्ध्येन ।

54 जाम० । अस्य को दोषः ।

दारैर्मुक्तकुचांशुकैः परिवृतं प्राचीनमेषां नृपं
नाहिंसीद्यदसौ कुठारहतकस्तस्यैतदुज्जृम्भितम् ।
यन्नारीकवचान्वयप्रणयिनां क्षत्राधमानामिमा
दुर्वाचः प्रविशन्ति मे श्रवणयोर्धिक् क्षत्रगोत्रे कृपाम् ॥ २६ ॥

55 रामः । भगवन् अलमिह क्षीरकण्ठे कठोरकोपतया । तत्क्षम्यताम् ।

56 जाम० । आः किमुच्यते क्षीरकण्ठ इति । विषकण्ठः खल्वसौ ।

57 लक्ष्मणः । भगवन् शितिकण्ठशिष्येण तर्हि विशेषतः क्षन्तव्यम् ।

58 जाम० । सामर्षम् । आः कथं विषकण्ठनामसाम्येन त्वमपि मे गुरुः ।

59 लक्ष्मणः । विहस्य । भगवन् अन्याभिसंधानेन मयेदमुक्तम् । यत्किल

किरीटमधिरूढेऽपि बाले प्रालेयरोचिषि ।
शितिकण्ठस्य किं चित्ते धत्ते कोपाङ्कुरः पदम् ॥ २७ ॥

तद्भवांस्तदन्तेवासी ।विशेषतः क्षन्तुमर्हति ।

---

53. A. om. वत्स. C. E. माननीयमुनौ.

54. B. अहो before अस्य. A. न for कः. D. कच for कुच & पतिम् for नृपम्. A. अहिंस्यत्.

55. A. om. राम॰. D. G. om. भगवन्. A. इहालम्. D. कोपकठोरतया.

56. A. रे before क्षीर°. A. D. अयम् for असौ.

57. A. °शिष्य. B. G. om. तर्हि before which D. हि.

58. C. D. G. om. सामर्षम्. A. D. om. नाम. A. B. मम.

59. A. has not लक्ष्मणः. ... °प्रालेय. C. E. F. om. अभि. D. अस्य संधानेन न मया &c. & च्चित्ते किम्. A. puts तद्भवान् &c. into the mouth of Râma. A. भगवन् & B. भगवान्. A. °वासिनि मयि. B. D. G. इति after °वासी. A. B, D. F. अर्हसि.

60 जाम०। स्वगतम्। अहो अस्य क्षत्रियबटोर्वाक्परिपाटीपाटवम् । भवतु । प्रकाशम् । तदिदं तावत्क्षान्तमेव मया । अयं तु न क्षमते प्रकृतिकठोरः कुठारः । शीलं न वेत्सि कथमस्य ।

क्रीडाविनिर्मितमुहुर्मददोर्विलास-
निःशेषराजकवधस्य परश्वधस्य ।
कीलालकीकसकचैः परितो विचित्य
येन द्विधापि विदधे पृथिवी त्रिवर्णा ॥ २८ ॥

पुनः सामर्षम् । कथमस्य हरप्रसादपरशोः शीलमपरिशीलितं ते ।

यत्र क्रामति सङ्गराङ्गणभुवं दुर्वारधाराञ्चल-
क्षुण्णक्षत्रकिशोरकण्ठरुधिरैर्नीरेणुका भूरभूत् ।
तादृग्बालवरस्वयंवरपरस्वर्लोककन्याकर-
क्रीडापुष्करदामरेणुभिरभूद्द्यौरेव रेणूत्कटा ॥ २९ ॥

61 लक्ष्मणः । भगवन् एतत्सत्यं यत्किल भवत्कुठारधाराञ्चलविलसितेन नीरेणुका भूरभूदिति ।

62 जाम० । स्वगतम् । आः कथमयं रेणुकावृत्तान्तेन मर्म विध्यति । भवतु । प्रकाशम् । अये क्षत्रियपोत अलमिह निरपराधे भवति मुधा परश्वधपातेन । तदयं मे प्रकृतिकठोरभाषिणं भवत्कण्ठमेव पातयति कुठारः ।

---

60. B. om. क्षत्रिय & पाटी, and puts च after पाटवम्. A. B. om. तत्. A. B. G. om. तावत्. D. F. क्षन्तव्यम्. D. अति for प्रकृति & किम् for कथम्. A. वितत्य & D. G. विचिन्त्य. A. B. D. G. त्रिधा. A. B. आक्रामति. A. कठोर for किशोर. A. B. G. वीर for बाल. A. °वरे स्वयंवरचरे.

61. C. D. E. F. om. यत्किल. C. E. F. त्वत् for भवत्.

62. A. B. om. आः. G. om. अयम्. A. B. घट्टयति for विध्यति. A. B. तत् before अलम्. A. आपातेन. F. मर्म before कठोर. A. B, G. शातयति for पातयति.

63 नेपथ्ये । अये जामदग्न्य कथमतिप्रगल्भसे । तदिदमिदानीं भवच्छासनाय शरासनमादीयते ।

64 जाम० । विहस्य । कथमयं जनकः । उच्चैः । अये याज्ञवल्क्यशिष्य किं भवतः शरासनेन । पद्मासनमेवावलम्बस्व । पुनः सोत्प्रासम् ।

युष्माकं भोः सुघटितबहुन्यस्तपद्माक्षकण्ठा
मिथ्योत्कण्ठा किमिति समिति क्षत्रियश्रोत्रियाणाम् ।
तेऽन्ये चञ्चत्करतलचलच्चण्डनिस्त्रिंशधारा-
धौताराातिद्विपमदमषीपङ्कपूराः प्रवीराः ॥ ३० ॥

तदलं भवता । एतावेव तावत्क्षत्रियस्फुलिङ्गौ निर्वापयामि ।

65 पुनर्नेपथ्ये । अये जामदग्न्य कथं तथा शमधनसमृद्धस्य जमदग्नेस्तनयोऽपि शमदुर्गतोऽसि संवृत्तः ।

66 जाम० । कथमयमाङ्गिरसः । उच्चैः । अये शतानन्द कथय तावदिदमेवंविधं शमाभिधानं धनं कस्मात्पितुरुपात्तं गौतमाद्वा गोत्रभिदो वा ।

67 नेपथ्ये । आः पाप क्षत्रियापुत्र निजजननीकण्ठताण्डवितकुठार कुलाङ्गार कथं तपस्तुङ्गमाङ्गिरसमपि कुलं कलङ्कयसि ।

---

63. A. जनकः before अये. A. B om. अये. B. repeats जामदग्न्य. A. इति for अति. A. B. om. इदम्. A. B. G. आनीयते.

64. B. om. विहस्य. D. om. एव. A. om. सोत्प्रासम्. C. सोत्महासम् & F. सोत्प्रासहासम्. E. लसति for समिति. C. D. E. F. om. तावत्.

65. A repeats जामदग्न्य. D. त्रिंतथं for तथा. A दम for धन & puts दम before दुर्गतोऽसि. F. दुर्गमः for दुर्गतः.

66. A. दम after शम. B. F. G. om. धनम्. B. G. om. पितुः. D. G भगवतः before गौतमात्. B. om. the first वा.

67. B. G. om. पाप. A. D. om. निज. A. °ङ्गारक.

68 जाम० । आः पाप कुलपांसन पांसुलापुत्र कथं भृगूणामप्यग्रे तपस्ताण्डवं मण्डयसि ।

69 रामः । भगवन् सकललोकविख्यातमिदं भृगूणामाङ्गिरसां च कुलम् । तपोविशेषतस्तु भवतो भर्गशिष्यस्य । अत एव विज्ञापयामि ।

तपः शान्तं चेतः स्फटिकमणिमालापरिकरः
कुशाः कुण्डी दण्डः सततमुटजावासवसतिः ।
मुनीनामेतद्वः समुचितमुदग्रं न वचनं
न वक्रभ्रूभङ्गो न शरधनुषी नापि परशुः ॥ ३१ ॥

पुनः सविनयम् । भवानेव तावद्विचारयतु ।

क्व परशुरशुभस्ते कुत्र गोत्रं पवित्रं
क्व धनुरिदमुदग्रं निर्मलं कुत्र शीलम् ।
घनसमरकराला कुत्र नाराचमाला
कुशकिशलयलीला कुत्र वा पर्णशाला ॥ ३२ ॥

70 जाम० । कथमन्यमिव मामपि मुनिमात्रं मन्यसे । स एष जामदग्न्यः खल्वहम् ।

क्षुण्णक्षत्रकठोरकण्ठविगलत्कीलालधारासरि-
न्निर्वृत्ताभिषवस्य कृत्तशिरसां केशान्कुशान्कुर्वतः ।

---

68. D. om. अपि. G. अग्र्ये for अप्यग्रे. D. विडम्बयसि for मण्डयसि.

69. G. E. F. आंगिरसानाम्. B. D. om. कुलम्. B. तथापि & D. तयोः for तपः. A. विशेषः. D. om. तु. A. B. D. G. om. भवतः. A. भार्गव for भर्ग. D. भार्गवस्य. A. B. च for एव. B. D. G. निरतिः for वसतिः. D. नवनवम् for न वचनम्. A. G. सविस्मयम्. F. भगवान्. A. D. F. put च after क्व & उग्रम् for उदग्रम्. D. G. हेला for माला.

70. F. परशुः for जामदग्न्यः. B. कथामिव मां मुनिपुत्रं मन्यसे. G. प्रणातिपात्रं in place of अपि. A. मुनिपुत्रम्.

गृह्णन्रक्तजलाञ्जलीन्पितृगणो यस्य क्षणं स्वीकृतः
संतोषेण जुगुप्सया करुणया त्रासेन हासेन च ॥ ३३ ॥

तदलम् । इदानीमपि

कृत्वा त्रिःसप्तकृत्वः समिति विशसनं पूर्वमुर्वीपतीनां
कृत्वान्यत्सप्तकृत्वः पुनरपि कदनं दुर्मदानां नृपाणाम् ।
निर्माय क्ष्मापतीनां प्रतिसमरहतैरुत्तमैरुत्तमाङ्गैः
कापालीमक्षमालां झटिति भगवतो भैरवस्यार्पयामि ॥ ३४ ॥

71 रामः ।

प्रसीद त्वं रोषाद्विरम कुरु मे चेतसि गिरं
चिरं यत्सायासैर्बहुभिरिह वारैर्जितमभूत् ।
यशोवृत्तं वित्तं कितव इव विक्षोभतरल-
स्तदेतस्मिन्वारे भृगुतिलक मा हारय मुधा ॥ ३५ ॥

72 जाम० । कथं रे हारयिष्यामि । विमृश्य । अथवा

किं नाम वाग्डम्बरपण्डितेषु
युष्मासु बाणाः प्रचुराः प्रयुञ्जे ।
बाणान्रिपुप्राणहरान्मदीया-
न्सर्वेऽपि यूयं सहिताः सहध्वम् ॥ ३६ ॥

73 रामः । किमन्यैर्नन्वहमेव हरशरासनारोपणोपनीयमानजानकीकर-

---

C. E. F. किशोर for कठोर. D. कृत्त-शिरसः. A. क्षण°. B. G. क्षणं विस्मितः. D. च करुणा for करुणया. A. D. अहम् for अलम्. All except G. om. अपि. F. अन्यः for अन्यत्.

71. A. B. अञ्जलिं बद्ध्वा. A. C. D. E. F. व्यारोषात्. B. सायासै. & G. चायासैः, A. वृत्तं वृत्तम्, D. वित्तं वित्तम् & B. G. वित्तं वृत्तम्. A. ते & D. च for वि°. A. B. G. °तरलम्. B. यत् for तत्.

72. A. B. कितव इव after रे, & विहस्य. A. प्रयुज्य. D. तेनहि । बाणप्रहारान्निपुणान्मदीयान्. C. E. F. पुनः for रिपु°. A. क्षमध्वम्.

73. D. om. किमन्यैः. A. B. D. om. हर. D. आरोपणपण. D. G. उपनीत. A. B. विचल for मिलत्. C.

किसलयलीलानिहितकमलमालिकामिलदलिपटलकोलाहलसंगीतयशःपरिमलेन वक्षःस्थलेन सहिष्ये ।

74 जाम० ।

ईशात्यक्तपुराणचापदलनप्रोद्भूतगर्वोद्धति-
व्यग्रस्त्वं कतरः स मे तव गुरुः सोढुं न शक्तः शरान् ।
तुष्टादिष्टवरप्रदाद्भगवतः पद्मासनात्सादरं
मन्नाराचभयादयाचत किल ब्राह्मीं तनूं कौशिकः ॥ ३७ ॥

75 रामः । स्वगतम् । कथमयं भगवन्तं विश्वामित्रमप्यधिक्षिपति । तदतःपरं न सहिष्ये । प्रकाशम् । कथं रे ।

ईशात्यक्तपुराणचापदलनप्रोद्भूतगर्वोद्धति-
व्यग्रोऽहं कतरः स ते मम गुरुः सोढुं न शक्तः शरान् ।
तुष्टादिष्टवरप्रदाद्भगवतः पद्मासनात्सादरं
त्वन्नाराचभयादयाचत किल ब्राह्मीं तनूं कौशिकः ॥ ३८ ॥

पुनः साटोपम् । अये जामदग्न्य

तत्कोदण्डं कुलिशकठिनं भग्नमेतेन भग्नं
मग्नं शल्यं तव हृदि महन्मग्नमास्तावता किम् ।

---

E. बहलकोलाहल. A. संमीलितयशः &c. & सरिष्ये for सहिष्ये.

74. F. गर्वोद्धृतिः. D. व्यग्रत्वम्. A. यत् for मत्.

75. All except A. B. om. अयम् & अपि. F. ° क्षिपासि. D. om. तत्. A. B. D. G. om. कथं रे. A. B. पुनः साटोपम् after प्रकाशम्. A. om. ईशात्यक्त ... अये जामदग्न्य. B. has अये ईषादिति व्यग्रोऽहं स ते मम गुरुरिति त्वन्नाराचभयादिति पदव्यत्यासेन पुनः श्लोकं पठति for our ईशात्यक्त... कौशिकः. D. ईशात्यक्तपुराणेति पठति for the whole stanzı. C. E. F. गर्वाङ्कुर ° C. E. मे तव for ते मम. G. adds इति पदव्यत्यासेन पुनः श्लोकं पठति after कौशिकः. D. सकोपम् for साटोपम् after which C. E. F. add च. F. भीमं for the second भग्नं. F. लग्नम् & G. भग्नम् for the second

त्रैयक्षं वा भवतु यदि वा नाम नारायणीयं
नैतत्किञ्चिद्विगणयति मे दुर्मदो दोर्विलासः ॥ ३९ ॥

76 जाम० । सहर्षम् । साधु रे क्षत्रियपोत खद्योतसम साधु । यत्किल जामदग्न्यनाम्नश्चण्डधाम्नः पुरतो विद्योतसे । पुनः सामर्षम् । किमात्थ रे किमात्थ । तदेव पठति ।

77 रामः । नन्विदं भूयोऽप्युच्यते । पुनस्तदेवपठति ।

78 जाम० । साधु स्मारितोऽस्मि ।

79 रामः । किं तत् ।

80 जाम० ।

कराघाताद्विष्णोस्तरलवनमालापरिमल-
भ्रमद्भृङ्गध्वानद्विगुणितविकाशः समजनि ।
स यस्य ज्याघोषः सुररिपुवधूवर्गरुदित-
ध्वनिः स्वाध्यायानां प्रणव इव तत्कार्मुकमिदम् ॥ ४० ॥

81 रामः ।

करपङ्केरुहक्रोडे क्रीडितं येन शार्ङ्गिणः ।
तदेतत् ।

---

मम्म्. B. D. G. एतावता for आस्तावता. D. G. गणयति स. C. वाग्विलासः & G. दुर्विलासः.

76. A. रामः for जामदग्न्यः. C. E. add साधु after °पोत. A. B. राजन्यखद्योत for खद्योतसम. D om. the last साधु C. चन्द्रधाम्नः. A. अपि after पुरत. G. खद्योत इव after पुरतः, & om. पुनः सामर्षम्. F. om. रे किमात्थ.

C. E. पुनस्तदेव. D. G. om. तदेव पठति & put it in the mouth of राम ( 77 ).

77. A. om. this speech. D. om नन्विदं.. पुनः.

78. A. om. this speech.

79. C. E. जामदग्न्य । किं तत्.

80. C. D. E. om. जामदग्न्य. A. विकारः for विकाशः.

81. D. °पङ्केरुहाक्रान्त्या. C. E. F. वृन्दे for क्रोडे. A. B. D. G. क्रीडितम्.

82 जाम० ।

अथ किं यदि शक्तोऽसि गृहाण विगृहाण वा ॥ ४१ ॥

83 रामः । गृह्णामि ।

84 जाम० । तदेहि बाष्पायमाणभवद्बन्धुजनबन्धुरां वसुंधरामतिक्रम्य समरक्षमां क्षमामवतरावः । इति निष्क्रान्तौ ।

85 लक्ष्मणः । विलोक्य सहर्षं सकौतुकं च ।

मा शाम्भवं धनुरिवेदमपि प्रयातु
भङ्गप्रसङ्गमिति मन्दचलद्भुजेन ।
आर्येण कार्मुकमपीदमहो सहेलं
चक्रीकृतं भगवतो गरुडध्वजस्य ॥ ४२ ॥

86 नेपथ्ये । अहो कौतुकम् ।

उद्भिन्नश्चापचक्रादमरपरिहृतव्योमरन्ध्रावगाही
बाणोऽयं राघवस्य त्रिदशपुरगतिच्छेदकृद्भार्गवस्य ।
हंसीभूतः सुरस्त्रीकरकमलगलत्पुष्पसौरभ्यलुभ्य-
द्भृङ्गीसङ्गीतभङ्गीपरिचलितयशास्तूणपर्यङ्कमेति ॥ ४३ ॥

ततः प्रविशतो रामजामदग्न्यौ ।

87 जाम० । रामं विलोक्य निर्वर्ण्य च स्वगतम् ।

त्रिलोकी कोकीयं मुदमुदयतायेन लभते
विकाशं चाधत्ते मुनिजनमनःपङ्कजवनम् ।

---

82. B. राम त्वं after शक्तोऽसि. A. च for वा.

83. A. C. E. F. गृह्णाति.

84. C. E. F. बधू for बन्धु & क्ष्माम् for क्षमाम्.

85. A. B. अहो कौतुकम् for सहर्षं ...च. C. E. F. सकौतुकं सहर्षं च. A. om. the stanza. D. वलत् for चलत्. F. सलीलं for सहेलं.

86. A. B. om. नेपथ्ये । अहो कौतुकम्. A. हंसीभूतामरस्त्री° & लसत् for गलत्. D. भृङ्गीराजीविरावै॰ परिरचित°. A. परिमिलित. C. E. F. परिचरित°. D. G. स्वर्ग for तूण. A. D. °पर्यन्त.

87. A. लोकोऽयं for कोकीयं. All except B. G. have येन for अनेन. B, C. E. F. वा for च.

अये कोऽयं बालः कुवलयदलश्यामलतनु-
र्जगद्योनिर्ज्योतिः कथमिदमहो तत्परिणतम् ॥ ४४ ॥

पुनर्विमृश्य ।

आपूरणाय पुरवैरिशरासनस्य
बाणात्मना परिणतः किल लीलया यः ।
आरोपणाय पुनरस्य स एव शङ्के
बालात्मना परिणतः पुरुषः पुराणः ॥ ४५ ॥

प्रकाशम् । वत्स इत इतः ।

88 रामः । सलज्जमधोमुखस्तिष्ठति ।

89 जाम० । उपसृत्य रामस्य चिबुकमुन्नमय्य । अये किमिह लज्जास्थानम् ।

कमलबन्धुविलोचन यस्त्वया
स्वमहिमोन्नमनैरधरीकृतः ।
न किमसावधरीकुरुते नर-
स्त्रिदशकोटिकिरीटमणीनपि ॥ ४६ ॥

90 रामः । अञ्जलिं बद्ध्वा । भगवन्नलमनेन । दुर्विनयपङ्कमलिनीकृतमात्मानं तावद्भवच्चरणनखकिरणतरङ्गिणीजलेन क्षालयामि ।

चण्डमेव किल तिग्मरोचिषः
सौम्यमेव किल शीतरोचिषः ।

---

E. F. वत्से. All except B. G. have कोऽयं. D. इहमहो. C. E. F. परिणतमहो तत्कथमिदम्. F. repeats पुनः. A. B. पुरुषः पुराणः for किल लीलया यः. A. om. the last two lines of the stanza.

88. A. B. G. om. one इतः.

89. B. G. om. अये & read इति for इह. A. B. जलज for कमल.

90. A. om. अञ्जलिं...बद्ध्वा.

चण्डसौम्यमिति कौतुकावहं
नौमि तावकमहं महन्महः ॥ ४७ ॥

इति पादयोः पतति ।

91 जाम० । उत्थाप्य । अयि निसर्गकल्याणनिधे आशीरुक्तिरपि त्वयि पुनरुक्तिरेव । तथापीदमाशास्महे ।

यशःपूरं दूरं तनु सुतनुनेत्रोत्पलवनी-
तमस्तन्द्राचण्डातप तप सहस्राणि शरदाम् ।
इयं चास्तां युष्मच्छरशमितलङ्केश्वरशिरः-
श्रितोत्सङ्गानन्दत्सुरनरभुजङ्गा त्रिजगती ॥ ४८ ॥

तदनुजानीहि माम् । इति निष्क्रान्तः ।

92 रामः । कथं नयनपथमतिक्रान्त एव भगवान् । तदेहि भृगुकुलतिलकवियोगखिन्नमात्मानं बन्धुजनविलोकनेन विनोदयावः ।

इति निष्क्रान्ताः सर्वे ।

चतुर्थोऽङ्कः समाप्तः ।

---

F. भगवत् for भवत्. D. om. किरण. A. कौतुकं वहन्.
91. B. G. om. उत्थाप्य & निसर्ग. D. °निधेः & om. त्वयि. A. om. इदम्. D. नेत्रोत्सववती. C. D. E. F. °चन्द्रा° for चण्डा°. D. °तपन.

92. G. लक्ष्मणं प्रति । ननु before कथम्. A. विनोदयामः & D. आनन्दयावः.

# ॥ पञ्चमोऽङ्कः ॥

ततः प्रविशतो गङ्गायमुने ।

1 गङ्गा । सखि कालिन्दि किमिति दुर्मनायसे ।

2 यमुना । भअवदि भाईरहि अत्थि कारणम् ।

3 गङ्गा । कीदृशं तत् ।

4 यमुना । एक्कं दाव । अत्थि मह भादा सुग्गीवोत्ति ।

5 गङ्गा । सकौतुकमात्मगतम् । अये कथमस्याः कपिकुलोत्पन्नोऽप्ययं भ्राता । विमृश्य । उपपन्नमिदम् । अनयोः खल्वेक एवायं भगवान्सवित प्रसविता । प्रकाशम् । अथ किं तस्य ।

6 यमुना । सोऽतिवलिट्ठेण दुट्ठवलीमुहेण वालिणामहेएण परिहदो एक्कदुग्गमेत्तसरणो कइपअपरिवारो चिट्ठदि ।

7 गङ्गा । नन्विमावपि भ्रातरौ । तत्कथमनयोरीदृशं वैरायितम् । अथवा

एकामिषाभिलाषो हि बीजं वैरमहातरोः ।

इति ख्यातमेतत् । तत्किमनेन । द्वितीयमपि कारणं कथय तावत् ।

---

2 भगवति भागीरथि अस्ति कारणम् ।

4 एकं तावत् । अस्ति मम भ्राता सुग्रीव इति ।

6 सोऽतिबलिष्ठेन दुष्टवलीमुखेन वालिनामधेयेन परिहृत एकदुर्गमात्रशरणः कतिपयपरिवारस्तिष्ठति ।

---

1. C. D. E. F. om. इति.

4. C. om. यमुना. A. मे for मह.

5. A. B. om. अपि. D. G. om. अयम्. A. D. G. om. भगवान्. A. पिता.

6. D. om. सोति. A. C. E. F. om. ति. D. F. वालिमाहेन्द्रेण. A. B. G. परिहूगो. D. क इव अस्य. C. E. F. वट्टदि. B. चिट्ठदित्ति.

7. A. B. G. किम् for कथम्. A. एतादृशम्. A. B. G. इत्यर्धोक्त एव after वैरायितम्. A. om.

8 यमुना । कस्सिंपि दिअहे गहीअतवस्सा विअ मम्महवसन्ता दोवि तरुणा जटाहरा एक्का चक्कवाकपीणत्थणी चन्दवअणा मं उत्तरिअ दक्खिणतीरेण चालिदुं उवक्कन्ता ।

9 गङ्गा । ततस्ततः ।

10 यमुना । तदो तीए खणं विलम्बिअ पणमिअ मुउलिअकरकमलजुअलाए अहमेरिसं विण्णत्ता । अयि देवि दिणअरणन्दिणि पुणोवि णिअकुटुम्बस्स दंसणप्पसादं करेसुत्ति ।

11 गङ्गा । तत्कथं संभावयसि ।

12 यमुना । गङ्गायाः कर्णे । एवमेवम् ।

13 गङ्गा । असंभावनीयमिदम् । तन्नूनमावर्तशतभ्रमितहृदया किमप्यलीकमनुभूतवती । अथवा को जानाति विधेः संविधानवैदग्ध्यम् ।

14 यमुना । जइ संवुत्तो ता कहं भअवदीए ण गोअरो इमो वुत्तन्तो ।

---

8 कस्मिन्नपि दिवसे गृहीततपस्याविव मन्मथवसन्तौ द्वौ तरुणौ जटाधरावेका चक्रवाकपीनस्तनी चन्द्रवदना मामुत्तीर्य दक्षिणतीरेण चलितुमुपक्रान्ता ।

10 ततस्तया क्षणं विलम्ब्य प्रणम्य मुकुलितकरकमलयुगलयाहमीदृशं विज्ञप्ता । अयि देवि दिनकरनन्दिनि पुनरपि निजकुटुम्बस्य दर्शनप्रसादं कुरुष्वेति ।

14 यदि संवृत्तस्तत्कथं भगवत्या न गोचरोऽयं वृत्तान्तः ।

---

हि for which D. has अयम्. D. महावैरतरो: & has एतत् for इति. E. स्थानं for ख्यातम् A. om. एतत् for which C. D. E. F. have इदम्.

8. A. B. एक्कस्सिं. B. om. पि after which F. has हि. A. दुवे. B. दोण्हि. D. दोण्णि & E. दो. A. B. G. om. पीण. C. E. F. मे for मं. D. G. दक्खिणं & om. तीरेण.

10. A. B. D. G. add अ after तदो. D. णमिअ मौलिकरकमलाए. A. एवं for एरिसं. D. om. पुणो & has संदसण° F. करेत्ति.

12. A. एवं विअ. C. E. F. एव-मेतत्.

13. D. असंभाव्यम्. B. इदानीम् after नूनम्.

15 गङ्गा । न किंचिदेतत् । मया हि ब्रह्मलोकादागतायाः सरस्वत्याः समागमसुखव्यग्रचित्तया स्थितम् । तदेहि इयमदूरे सरयूः । तेन तन्मुखादेव निरूपयावः । इति परिक्रामतः ।

16 प्रविश्य । सरयूः । देव्यौ नमो वाम् ।

17 उभे । अवितथमङ्गला भव ।

18 गङ्गा । सरयूं हस्ते गृहीत्वा । सखि कथं सन्तापनिमग्नमङ्गकं ते ।

19 सरयूः । भगवति प्रतीपं भाषसे । ननु लज्जापङ्कनिमज्जनमनुभवन्त्या मेऽर्धावलम्बनोऽयमङ्गसन्ताप इति ।

20 गङ्गा । स्पष्टं तावत्कथय ।

21 सरयूः ।

बहलगलितैः सन्तापोष्णैस्तटान्तविहारिभि-
र्दशरथपुरीपौरस्त्रीणां विलोचनवारिभिः ।
उपचयवतां सन्तापोष्णां निजां दधती तनू-
मिह मुहुरहं मातर्लज्जां वहामि जहामि च ॥ १ ॥

22 गङ्गा । सातङ्कम् । किं पुनरासामश्रुवृष्टेः कारणम् ।

23 सरयूः । गङ्गायाः कर्णे । एवमेवम् ।

24 गङ्गा । हा इन्दुमतीनन्दन । हा सकललोकहृदयानन्दन चन्दन ।

---

15. A. B. om. तेन. G. तेन हि.

17. A. B. G. put आलि before अवितथ. for which A. B. have अविरल.

18. D. G. तापनि°. A. तापेन मग्न-मङ्गम्.

19. D. भवति. A. प्रति मा भा° B. G. आभाषसे. C. E. F. °पङ्क° D. निमग्नमंगमनु° & ते for मे. A. वलम्बनमिदं यदङ्ग° C. D. E. F.° अविलङ्घनीयः for अर्धा .... नः. B. om. इति.

20. A. B. स्फुटम्. A. B. D. G. आवेदय.

21. C. F. दधतीम्. D. अहमिह मुहुर्लज्जापङ्कम्. A. om. जहामि.

23. C. E. F. एतमेतत्.

24. A. om. first हा. D. om. हृदय. C. D. E. F. om. चन्दन. G. adds महा before कोदण्ड. A. °तन.

हा कोदण्डपण्डित । हा आखण्डलप्रियसख । हा निजतनयनिर्विशेषप्रीतिपरिपालितसकललोक । हा रामभद्रैकजीवित ।

25 सरयूः । स्वगतम् । अस्यैव विलसितमेतत् ।

26 गङ्गा । हा महाराज दशरथ । इति मूर्छति ।

27 यमुना । अंशुकान्तेन वीजयन्ती । भअवदि समस्ससिहि समस्सासि हि णं इमेहिं जेव्व गुणेहिं असोअणिज्जो सो राआ ।

28 गङ्गा । सरयूं प्रति । सखि तवैव न केवलमयं तापः सकलजनसाधारणः खल्वसौ । तदेनं रामभद्रच्छाययापनोदयामः ।

29 सरयूः । निश्वस्य । भगवति न खल्वप्रोषितसेकसलिलः कलमकेदारः परिशुष्यति ।

30 गङ्गा । स्पष्टं तावत्कथय ।

31 सरयूः । अधरस्फुरणं नाटयति ।

---

27 भगवति समाश्वसिहि समाश्वसिहि । नन्वेभिरेव गुणैरशोचनीयोऽसौ राजा ।

---

यानाम्. D. प्रति for परि which F. om. A. रामचन्द्रैकजीवन. D. om. भद्र. A. B. G. इति मूर्छति after °जीवित.

25. A. अस्यैव ( ? ) विलपितमिदम्.

26. A. om. हा. G. मूर्छिता पतति.

27. A. B. G. अंशुकाञ्चलेन. D. F. वीजयति. C. E. F. om. one समस्सासिहि. A. puts णं इमेहिं... राआ in sanskrit in the mouth of सरयू, where, however, it reads शोचनीयः for असोअणिज्जो. B. om. राआ.

28. , न तवैव. D. om. केवलमयम् & puts अयम् after तापः D. G. सर्व°. F. om. जन. C. E. F. असौ खलु. C. E. F. एतत् for तत्. C. D. E. F. एवम् for एनम्. D. अपनोदय.

29. G. विश्वस्य. A. B. G. °सलिलसेकः. D. om. कलम. A. कमल.

30. A. B. स्फुटम्.

32 गङ्गा । अलमलं कथं दावानलशोषितायां तरुशाखायां कुठारमारोपयितुमिच्छसि । अथवा कथय तावत् ।

33 सरयूः । स्वगतम् । अहो

न ज्ञातुं नाप्यविज्ञातुं नेक्षितुं नाप्युपेक्षितुम् ।
सुजनः स्वजने जातं विपत्पातं समीहते ॥ २ ॥

प्रकाशम् । रामभद्रमभिषेक्तुं कृतमनोरथं दशरथमेत्य कैकेयी प्रथमं तावदिदमुक्तवती ।

इदमेव नरेन्द्राणां स्वर्गद्वारमनर्गलम् ।
यदात्मनः प्रतिज्ञा च प्रजा च परिपाल्यते ॥ ३ ॥

34 गङ्गा । स्वगतम् । अनेनैव तावदकल्याणसूचिः सूचिता दुराशया । प्रकाशम् । चरमं च किम् ।

35 सरयूः ।

त्वया देयं यन्मे द्वयमभिहितं देहि तदिदं
वनं कौशल्येयो विशतु युवराजोऽस्तु भरतः ।

36 गङ्गा । सोद्वेगम् । ततः किं वृत्तम् ।

37 सरयूः ।

इतीदं कैकेय्या वचनमभिगम्याकुलमतेः

---

32. D. om. गङ्गा । अलमलम् । & puts कथं...इच्छसि in the mouth of सरयू in 31. & gives अथवा....तावत् to गङ्गा.

33. A. B. G. अनुज्ञातुम् D. om. नेक्षितुम्. D. G. स्वजन. D. स्वजनेन जातम्. F. ज्ञातम् for जातम्. C. E. F. द्वार for पात. D. om. दशरथम्. A. उपेत्य. F. om. प्रथमम्. D. अपावृतम् for अनर्गलम्.

34. A. अकल्याणं सूचितं दुराशया. B. °सूची & G. रुची. A. om. प्रकाशम्. A. F. om. च.

36. A. सवेगम्. B. सावेगम्. D. सोद्वेगम्.

37. F. om. सरयूः. A. B. कैके-

पितुः पादौ नत्वा मुदितहृदयोऽसौ वनमगात् ॥ ४ ॥

38 गङ्गा । यमुने तदिदं यत्कथितवत्यासि । सविषादम् । हा रघुकुटुम्बक निहतमासि ।

39 यमुना । भअवदि किं एक्कं रहुकुटुम्बअं । णं मिअमहेसिवणदेवदाओ परिहरिअ सअलो जेव्व जीअलोओ रामचन्दमुहचन्दविलोअणाविहीणत्तणेण णिहदो ।

40 सरयूः । एवमेतत् ।

प्रोषितवति रजनिकरे बन्धुतया न खलु कैरवाण्येव ।
म्लायन्ति किन्तु सहसा भुवनान्यपि तमसि मज्जन्ति ॥ ९ ॥

41 गङ्गा । सखि सरयु कथय तावदधुना कीदृशी वृत्तिः सीतालक्ष्मणयोर्वत्सरामभद्रे । तौ हि तस्य सदैव संनिहितौ चन्द्रिकाप्रसादाविव चन्द्रमसः ।

42 सरयूः । यादृशी चन्द्रिकाप्रसादयोश्चन्द्रमासि ।

---

39 भगवति किमेकं रघुकुटुम्बकम् । ननु मृगमहर्षिवनदेवताः परिहृत्य सकल एव जीवलोको रामचन्द्रमुखचन्द्रविलोकनविहीनत्वेन निहतः ।

---

यौवन &c. B. अवगम्य.

38. D. om. यमुने...आसि. C. E. F. om. यमुने & यत्. C. D. G. put कुल after रघु. A. °कुटुम्ब & B. D. G. कुटुम्बम्. B. G. इति for आसि.

39. F. om. यमुना. All except A. B. have एक्क किम्. D. G. रघुकुल. A. पणं before मिअ°. C. D. E. F. om. जेव्व. A. B. विरहि (A. ह) त्तणेण. D. °विहीणो.

40 D. कैरविणी.

41. G. एवमेतदपरम् before सखि. C. E. F. सरयूः. All except A. B om. अधुना. C. D. E. F. वत्स before सीता°. A. रामचन्द्रे. A. B. G. put तौ हि...चन्द्रमसः in the mouth of सरयू. A. चन्द्रमासि.

42. A. om. यादृशी &c. G. असौ

43 गङ्गा सहर्षं स्वगतम्। कथं सहैव वनं गतावित्युक्तं भवति। प्रकाशम्। सखि जीविताऽस्मि तावदनेन वागमृतेन। ननु क्षणमपि रामचन्द्रविरहमनुभवितुमसहा मे वत्सा जानकी।

44 सरयूः। एवमेतत्। रामचन्द्रेण हीदमुक्ता जानकी।

अम्बाः शुश्रूषमाणा मे शरदः कतिचिन्नय।

इदमाकर्ण्य वचनं तथा मूर्छिता जानकी यथा स्वजनकरोपनीतशीतकरासारसिक्तापि न प्रबुद्धा।

45 यमुना। ता उण कहं पउद्धा।

46 सरयूः।

वनं वनजपत्राक्षि समागच्छ सहैव वा ॥ ६ ॥

इत्यनेन रामभद्रवचनामृतेन।

47 गङ्गा। उचितमिदं जानकीस्नेहस्य।

48 यमुना। अवि णाम रामलक्कणाणं वि कोवि संवादो संवुत्तो।

---

45 तत्पुनः कथं प्रबुद्धा।

48 अपि नाम रामलक्ष्मणयोः कोऽपि सवादः संवृत्तः।

---

जानास्येव before यादृशी. B. D. इव & G. एव after °प्रसादयोः. G. gives this speech to गङ्गा.

43. D. G. स्वगतं सहर्षम्. D. om. वनम्. A. B. यथा before तावत्. A. B. D. G. om. ननु. D. G. क्षणमपि हि. A. B. रामभद्र. B. D. असहमाना.

44. A. B. रामभद्रेण & तदेवम् for हीदम्. A. कतिचिच्छरदः. B. एव in place of वचनम् which G. om. C. E. F. मूर्छिता जानकी तथा. D. om. आसार.

45. C. E. F. कहं उण.

46. A. तत् for वा. A. B. अनेनैव. F. चन्द्र for भद्र which is omitted by C. D. E. F. D. om. अमृत. All except A. B. put एव after अमृतेन

47. A. om. गङ्गा.

48. A. B. F. om. वि before को. D. कं वि.

49 सरयूः । अथ किम् । इदमुक्तो हि रामभद्रेण लक्ष्मणः ।

गमय वत्स निमील्य विलोचने
कतिचिदत्र निमेषसमाः समाः ।
अपि च मामिव शीलसुशीतलं
शुभरतं भरतं परिशीलय ॥ ७ ॥

इदमुक्तंच लक्ष्मणेन । अये रघुनाथ ।

त्वया समं मे चत्वारि यामा एव युगान्यपि ।
चतुर्दश समाः स्थातुं विना मन्वतराणि मे ॥ ८ ॥

अपिच ।

त्वया मम समेतस्य कल्पा अपि समासमाः ।
भवता तु वियुक्तस्य कल्पकल्पः क्षणोऽपि मे ॥ ९ ॥

50 गङ्गा । अपि नाम कौशल्यया किमपि शिक्षितो रामभद्रः ।

51 सरयूः । अथ किम् । सा हि अपि वत्स रामभद्र सीतामित्यर्धोक्त एव बाष्पाम्बुरुद्धकण्ठीदमुक्तवती । अथवा वत्सलक्ष्मणे रक्षितारि को भवान् सीतासमीक्षणस्य । तदेवं तावदभ्यर्थयामि ।

---

49. D. F. G. रामचन्द्रेण. A. om. च after उक्तम्. C. E. F. om. अये रघुनाथ. A. यामन्येव & राम त्वया समेतस्य. B. C. E. F. समम् for मम. A. समाः समाः & C. E. समैः समाः. B. G. विप्रयुक्तस्य. A. मम for अपि मे.

50. B. om. नाम. D. om. किमपि for which G. अपि किंचित्. D. रामचन्द्रः.

51. F. om. सीताम्. A. बाष्पकण्ठम्. D. अव° in place of अम्बु which B. G. om. C. E. F. सति after रक्षितरि. A. B. वा after कः & °समीक्षणे. G. इदम् for एवम्. A. B. तदेतदेव त्वाम (B. भ्य) र्थयामि. A. B. G. मुग्धमुखे. D. यस्तु ते सहज &c., C. D. E. F. रामेण. C. E. G. अपि for अयि. D. G. °जीविते अपि. A. रक्षिणीभवितव्यम्. B. इत्यत्रापि.

इह दुग्धमुखे वत्स लक्ष्मणे दक्षिणो भव ।
अपि राज्योपभोगेभ्यो यस्य त्वं सहजप्रियः ॥ १० ॥

इदमुक्तं च रामभद्रेण । अयि मातर्निजजीविते दक्षिणेन भवितव्यमित्यपि शिक्षणीयमेव ।

52 गङ्गा । तन्नूनं ततःप्रभृति सहजसौन्दर्यमेवाभरणं वत्सरामस्य ।

53 सरयूः । अन्यदप्येकम् । विमुञ्चन्सकलमाभरणजातमित्थमभ्यर्थितः कौशल्यया रामभद्रः ।

हस्तावलम्बदानाय सीतामाङ्गल्यसम्पदः ।
इदं विमुञ्च मा वत्स राम रत्नाङ्गुलीयकम् ॥ ११ ॥

इदमन्यच्च ते कथयामि । धीरं समाकर्णय ।

54 गङ्गा । कथमेतावदाकर्णितवतीमपि मामधीरामाशङ्कसे ।

55 सरयूः ।

निकामं रामस्य प्रमुदितमुखाम्भोरुहरुचे-
र्जटावल्लीर्मल्लीमुकुलसदृशैर्बाष्पपृषतैः ।
निषिञ्चन्सौमित्रिः कथमपि वितेने खलु यदा
तदा जातं मातः करुणमयमेतज्जगदपि ॥ १२ ॥

---

A. B. शिक्षितव्यम्. C. E, F. om. एव.
52. A. B. om. तत्. C. E. F. om. वत्स. A. B. om. राम.
53. A. विमुञ्च. C. D. E. F. खलु before सकल°. A. om. जात. D. F. इति for इत्थम्. A. B. D. रामचन्द्रः. C. E. F. °मङ्गल.° D. अन्यदपि. A. D. कथयामि ते. A. धीरे & all others except D. धीरा.
55. A. °वल्लीमल्ली°. C. E. मातर्जातम्.

56 यमुना । अवि णाम तस्सिं समए सीदा वि किंवि सिक्खिदा बन्धुअणेण ।

57 सरयूः । अयि देवि विपरीतमालपसि ।

गहनविपिनवासोत्कण्ठया संप्रयातं
प्रियतममनुयान्त्या तत्क्षणं राजपुत्र्या ।
चरणकमलगुञ्जन्मञ्जुमञ्जीरशब्दैः
स्फुटतरमुपादिष्टा बान्धवाः साधुवृत्तम् ॥ १३ ॥

इदं तु वृत्तम् ।

पुरः कान्तं यान्तं विपिनमनुयान्त्याः सरभसं
तदा तौ सीतायाः किसलयनिभौ वीक्ष्य चरणौ ।
मुहुः शीतास्तप्ताः किमपि च मुहुर्बन्धुनयनैः
समं मुक्ता मुक्तासदृशरुचयो बाष्पकणिकाः ॥ १४ ॥

58 गङ्गा । हर्षविषादयोर्विलसितमेतत् ।

59 सरयूः । इदं च बन्धुजनेन शिक्षितो रामभद्रः ।

बाला विदेहतनया तरलौ भवन्तौ
दिग्दक्षिणा च रजनीचरचक्रजुष्टा ।
तद्वत्स वत्सलतयेदमुदाहरामो
मा राम गच्छ नयदक्षिण दक्षिणाशाम् ॥ १५ ॥

---

56 अपि नाम तस्मिन्समये सीतापि किमपि शिक्षिता बन्धुजनेन ।

---

56. A. B. om. त्रि after सीवा.
57. A. om. देवि. A. B. तथा ननु before गहन. &c. D. उपादिष्टं बन्धुभिः. C. E. F. बन्धवः. B. D. G. तरलौ. C. D. E. F. समुन्मुक्ताः.

58. B. सत्यम् before हर्ष°. A. तत् for एतत्.
59. A. om. सरयूः & has स before इदम्. C. E. F. तु for च which D. G. om. A. बन्धुजनैः. A. D. G.

60 गङ्गा । ततस्ततः ।

61 सरयूः । ततस्तामेव दिशं प्रति

सुरमुरजगभीरधीरनाद-
द्विगुणगुणध्वनिचापदत्तहस्तः ।
पुरजननयनैः कृतं दधानः
कुवलयदाम जगाम रामभद्रः ॥ १९ ॥

62 यमुना । को उण सो अवसरो सुरमुरअसद्दस्स ।

63 गङ्गा । सखि न जानासि । गभीरं ध्वनद्भिः खलु सुरमुरजैः किमपि गभीरमेव ध्वनितम् । पुनः सविषादम् । हा दशरथ सकलगुण-संपदां भाजनं भूत्वापि कथमेकस्य भागधेयस्य भाजनं न जातोऽसि ।

64 यमुना । कहं उण सो राआ तुम्होहिं पसंसीअदि जेण तारिसो वि तणओ तुणं विअ मुक्को ।

65 सरयूः । शान्तं पापम् ।

---

62 कः पुनः सोऽवसरः सुरमुरजशब्दस्य ।

64 कथं पुनः स राजा युष्माभिः प्रशस्यते येन तादृशोऽपि तनयस्तृणमिव मुक्तः ।

---

रामचन्द्र. A. नुष्टा, D. G. तुष्टा, & F. पुष्टा. D. दक्षिणस्याम्.

60. A. om. one ततः.

61. F. om. ततः ... प्रति. A. om. ततः. D. om. दिशम्. A. सुरजन.

63. D. om. न before जानासि. A. गभीरं निनदद्भिः & D. गभीरध्वनिभिः. A. D. om. खलु. A. D. E. गम्भीर after किमपि. A. गम्भीरतरम् & B. गभीरान्तरम्. C. D. E. F. om. एव. D. गम्भीरध्वनितम् & सकलगुणानाम्. A. B. om. अपि. B. भागधेयभाजनम्. A. D. G. om. भागधेयस्य. D. has not भाजनं भूत्वापि कथमेकस्य भागधेयस्य. C. E. F. न भाजनम्.

64. D. संसईअदि. A. ईरिसो.

65. A. D. repeat शान्तं पापम्. A. °क्रोधप्रसभभययोः C. D. E. F. चोरत्रस्तः.

नरेन्द्रः कैकेयीवचनपरिपाटीविगलितः
क्षणं मोहक्रोधप्रसरभरयोरन्तरचरः ।
सुतं चोरग्रस्तो मणिमिव करस्थं न कृपण-
स्तृणानीव प्राणान्पुनरयममुञ्चद्दशरथः ॥ १७ ॥

66 यमुना । अवि णाम भरदस्स णाणुमदमिदम् ।

67 सरयूः । अयि भरतस्य मातुलगृहादागतस्य कैकेय्याश्च संवाद एवोत्तरं दास्यति ।

68 गङ्गा । कीदृशः पुनरसौ ।

69 सरयूः ।

मातस्तातः क्व यातः सुरपतिभवनं हा कुतः पुत्रशोका-
त्कोऽसौ पुत्रश्चतुर्णां त्वमवरजतया यस्य जातः किमस्य ।
प्राप्तोऽसौ काननान्तं किमिति नृपगिरा किं तथासौ बभाषे
तद्वाग्बद्धः फलं ते किमिह तव धराधीशता हा हतोऽस्मि ॥ १८ ॥

70 गङ्गा । सहर्षम् । वत्स भरत भवसि रामानुजन्मा ।

71 सरयूः ।

रामे प्राप्ते वनान्ते कथमपि भरतश्चेतनां प्राप्य तातं
नीत्वा देवेन्द्रलोकं मुनिजनवचनादूर्ध्वदेहक्रियाभिः ।

---

66 अपि नाम भरतस्य नानुमतमिदम् ।

---

66. A. B. इदं णाणुमदम्.
67. All except A. B. अये. A. B. मातुलगृहादागतस्य भरतस्य.
68. A. अयम्.
69. B. F. °पतिभुवनम्. C. D. E. F. कथम् for कुतः. A. D. जातम्. A. F. वाग्बन्धः.
70. B. ततः किम् after नुजन्मा.
71. C. D. E. F. om. सरयूः । रामे ... वीरः. A. वनान्तम्. B. वासतोऽभ्येत्य for चेतनां प्राप्य. B. °क्रियान्ते. A. स्वजनव्रततनुः. B

भ्रातुः शोकाभितप्तः स्वजनपरिवृत्तः पालयामास नन्दि-
ग्रामे तिष्ठन्नयोध्यां रघुपतिपुनरागामिभोगाय वीरः ॥ १९ ॥

72 यमुना । तदो तदो ।

73 सरयूः । अहमेतावदेव जानामि । ततः परं तद्वृत्तान्तनिरूपणाय निजजलकमलवनवासी कोऽपि कलहंसः प्रस्थापितो मया ।

74 प्रविश्य । कलहंसः । देव्य इदं नमो वः ।

75 तिस्रः । अयि कमलावतंस कलहंस मङ्गलमन्दिरं भव ।

76 गङ्गा । अये कथय तावद्वत्सानां मे प्रथमतःप्रभृति पथि चरितानि ।

77 हंसः ।

विघ्नानिवानुसरतो विनिवार्य पौरा-
नग्रे स्वयं नय इवैष जगाम रामः ।
एनं विभूतिरिव सानुजगाम सीता
तां लक्ष्मणस्तु सुखलाभ इवान्वगच्छत् ॥ २० ॥

78 गङ्गा । ततस्ततः ।

79 हंसः । ततः कियत्यपि दूरे पथिकलोकेनेदमुक्तस्ते वत्सवर्गः ।

पन्थाः समः सिकतिलो मृदुशाद्वला भू-
र्वैतस्वती सरिदियं शिशिरा न दूरे ।

---

72 ततस्ततः ।

---

नन्दिग्रामम्. A. °योगाय & G. °भोगाप (?)

73. A. एतत्. A. B. परन्तु. A. om. तत्. C. D. E. F. om. जल.

74. D. F. om. कल in कलहंसः.

75. C. D. E. F. om. कलहस. after which A. adds विजयी भूत्वा.

76. B. अयि. C. E. F. om. मे. B. om. पथि. A. चरितम्.

77. A. एव for एष & एवम् for एनम्. D. च for सा. A. B. G. अनुगच्छत्.

79 D. om. ततः. A. D. पथि.° A. एवम् for इदम्. C. E. मृदुशीतला.

अग्रे चकास्ति सरसी च कुमुद्वतीयं
कादम्बकूजितकरम्बितहंसनादा ॥ २१ ॥

अन्यच्च ।

तरुरयमितः शीतच्छायः स्रवन्मधुशीकरैः
सरिदियमितः स्वल्पस्वच्छप्रवाहमनोरमा ।
इदमिदमितः स्निग्धामोदं मुहुर्मधुरध्वन-
न्मधुकरवधूमुग्धाभोगं वनं सरसीरुहाम् ॥ २२ ॥

80 गङ्गा। अहो अध्वश्रमशमनानि पथिकजनवचनानि ।

81 यमुना। तदो तदो ।

82 हंसः। ततः प्रियतममनुगच्छन्ती जानकी ।

भीतं विलोक्य हरिणं करुणार्द्रचित्ता
पत्युर्निजेन पिदधे धनुरंशुकेन ।
केदारसीम्नि सदयं च यवप्ररोह-
मादाय साधु विदधे श्रवणावतंसम् ॥ २३ ॥

अन्यच्च ।

तटभुवि सरसीनां सैकते निम्नगानां
परिसरमपहातुं चक्रवाकीं प्रियस्य ।

---

81 ततस्ततः ।

---

A. वेतस्विनी. A. B. हंसमाला & G. हंसनादाः. A. om. अन्यच्च. & has स्वच्छस्वल्प° A. B. मनोहरा. A. स्निग्धं मोदम्. D. F. मधुरम्.

80. C. F. om. अहो. D. °शामितानि. B. adds पथि before पथिक.° C. E. F. om. जन.

82. B. प्रियं रामम्, & C.D. E. F. प्रियतमानुपदम् in place of प्रियतमम्. D. om. अनु. A. B. कलम & C. E. यवस for च यव.° B. सापि. A. B. अपि च. A. D. उपहातुम्. A. G. चक्रवाकी & समर्था. A. शुभम् for शुचम्.

क्षणमपि न समर्था लोलमालोकयन्ती
पथि जनकतनूजा प्राप हर्षं शुचं च ॥ २४ ॥

83 गङ्गा। एवमनुकम्पनीयवत्सला मे जानकी । पुनः सस्नेहम् । अपि तावत्पथि नीतिशीतलानि मे वत्सानां शीलानि ।

84 हंसः । कीदृशी पुनः पथिकनीतिः ।

85 गङ्गा ।

याववत्कर्णं तपति तपनस्तावदेव प्रयाणं
विश्रामश्च प्रसरति रवेरंशुजाले कराले ।
यात्रोद्योगः पुनरपि रवेर्लम्बमाने विमाने
यावन्मीलत्यथ कमलिनी तावदावासबन्धः ॥ २५ ॥

86 हंसः । भगवत्यनवस्थितमिदं नित्यपथिकानाम् ।

87 गङ्गा । हन्त कथं कठोरातपस्पर्शमपि जानन्ति जानकीललिताङ्गानि ।

88 हंसः । अलं कातरतया ।

अपि तपति पतङ्गे चण्डचण्डैर्मयूखैः
पथि जनकतनूजा नैव सन्तापमाप ।

89 गङ्गा । सकौतुकम् । कथमिव ।

---

83. D. अनुकम्प्या वत्सजानकी. B. F. अनुकम्पनीये. A. वत्सा for वत्सला after which C. E. वत्सा. A. B. om. मे. A. D. अयि.

85. A. om. विमाने. A. & B. om. मे. D. om. मे...शीलानि. & reads यावन्नामीलति for यावन्मिलिति. B. D. अपि for अथ.

86. D. om. भगवति. F. भवति.

87. F. om. कथम्. A. B. D. कठोरताप (B. °स्य) स्पर्शम्. A. जनयन्ति for जानन्ति.

88, A. अयि for अपि, & चण्डदण्डैः.

90 हंसः ।

अपरिचितनिमेषालोकमालोकयन्ती
कुवलयदलदामश्याममङ्गं प्रियस्य ॥ २६ ॥

91 गङ्गा । प्रियतमस्नेहशीतया सीतया न केवलमात्मा वयमपि जीविताः ।

92 सरयूः । पालिताश्च ।

93 हंसः ।

अत्युच्चण्डैस्तपनकिरणैस्तापितायां पृथिव्या-
मप्यन्येषां कठिनवपुषां दुर्गमे मार्गसीम्नि ।
प्रेमार्द्रेण प्रगुणितधृतिश्चेतसा शीतशीता-
न्मेने सीता प्रियतमपदैरङ्किताऩ्भूमिभागान् ॥ २७ ॥

94 यमुना । अये ताद दिणअर कहं णिअकुडुम्बए वि णिक्करुणोऽसि संवुत्तो ।

95 सरयूः । अयि देवि वसुधे कथं निजसुतायामप्येवं निर्दयासि संवृत्ता ।

96 गङ्गा । विहस्य । अलमनयोरुपालम्भनेन । न खलु स्नेहानुगुणवृत्तयो महाभूतप्रवृत्तयः ।

---

94 अये तात दिनकर कथं निजकुटुम्बकेऽपि निष्करुणोऽसि संवृत्तः ।

---

90. D. om. हंसः. A. D. श्यामलाङ्गम्.
91. A. शीतलायाः सीतायाः. B. D. G. शीतलया. A. जीविताः स्मः.
92. D. om. सरयूः.
93. A. B. D. G. अपि for अति.
94. A. B. G. अयि. A. B. D. om. कहम्. F. G. कुडुम्बे. B. om. वि.
95. B. D. G. सीतायाम् after अपि. C. E. F. om. एवम्. D. om. असि संवृत्ता.
96. A. om. गङ्गा. D. om. विहस्य. A. D. E. F. उपालम्भेन. A. स्नेहानुप्रवृत्तयः. B. बन्धन for गुण. B. D. G °प्रवृत्तयः. A. B D. भूतवृत्तयः. G. भूतवृत्तम्.

97 हंसः ।

कान्तेनाथ प्रणयमधुरं किंचिदाचञ्चलेन
श्रान्ता श्रान्ता जनकतनया वल्कलस्यांचलेन ।
चक्रे वीतश्रमजलकणास्निग्धमुग्धाननश्रीः
श्रान्तः श्रान्तः स पुनरनया लोचनस्याञ्चलेन ॥ २८ ॥

98 गङ्गा । अहो कमनीयता विनिमयस्य ।

99 यमुना । तदो तदो ।

100 हंसः । ततः

प्रत्यासन्ने भवति निलये संप्रयाता पुरस्ता-
त्तूर्णं क्षिप्तैः कतिपयपदैश्चापमादाय हस्तात् ।
श्रान्तं कान्तं नवकिसलयैः सानुजं वीजयन्ती
जाता सीता समुचितविधिप्रक्रियावैजयन्ती ॥ २९

पुनः सकौतुकम् । इदमन्यच्च सरसपेशलं कथयामि ते ।

जनकतनयाहस्तन्यस्तैर्मुहुर्नवपल्लवैः
शिशिरमसृणस्तत्कालं यः समेति समीरणः ।
प्रशममनुना खेदोद्भूतं जगाम कपोलयोः
सलिलमनयोः शोकोद्भूतं शशाम न नेत्रयोः ॥ ३० ॥

अपि च ।

---

99 ततस्ततः ।

---

97. D. F. पीत for वीत. A. लव for कण.

98. D. om. गङ्गा. A. विनयस्य.

100. A. क्षिप्रैः for क्षिप्तैः & किमिति before कथयामि. A. F. G. स्वेदोद्भूतम्. D. °परिकरैः; °शीतैः & विहृत for विरह.

कृतः स्थाने स्थाने विहितवरिवस्यापरिकरः
सुमित्रापुत्रेण श्रमशमनशीतो रघुपतिः ।
असावेतेनापि क्षणविरहबाष्पाञ्चितदृशा
कृतालोकश्चक्रे गलितसकलायासशिशिरः ॥ ३१ ॥

101 सरयूः । कियतां पुनरह्नां परिवर्तेन रघुराष्ट्रमतिक्रान्तं वत्सेन ।

102 हंसः । अयि कथमजानती वर्तसे रघूणामाधिपत्यम् ।

एते हि स्वशरावनम्रनिखिलक्ष्मापालमौलिज्वल-
न्माणिक्यस्फुरदंशुमांसलपदप्रेङ्खन्नखज्योतिषः ।
दूरोन्मुक्तचतुःसमुद्रलहरीविक्षिप्तशुक्तिस्खल-
न्मुक्तापङ्क्तिविनिर्मितैकवलयं भूमण्डलं भुञ्जते ॥ ३२ ॥

उत्तरकोसलास्तु त्रिचतुरैरेवाहोभिरतिक्रान्ताः । अथ पुरमथनमौलिमालतीमालां मन्दाकिनीमतीत्य कलिन्दगिरिकरिकपोलमदवारिधारां कालिन्दीमप्यतिक्रान्ताः ।

103 गङ्गा । यमुनां प्रति । सखि तदिदं यत्कथितवत्यासि ।

104 सरयूः ।

तपनसुतया देव्या यद्वा भगीरथकन्यया
विपुलविपुलैर्वीचीहस्तैश्चिरादपि किं कृतम् ।

---

101. A. गङ्गा. for सरयूः. D. रघुराज्यम्.

102. B. कथय before कथम्. A. अजानन्ती. D. वर्तते. A. आधिपत्ये. A. B. D. G. रस for शर. D. हारोन्मुद्र for दूरोन्मुक्त. A. मुक्ति for शुक्ति. A. B. D. G. °कोशलाः. B. D. G. om. तु. B. C. E. F. चतुर्भिः. A. B. om. एव. D. अभिक्रान्ताः. A. om. अथ पुर ... अतिक्रान्ताः.

103. D. om. यमुनां प्रति । सखि.

104. G. om. सरयूः. D. यद्वा देव्या. B. यद्भागीरथ°. A. B. C. E. F. चपलविपुलैः. C. D. E. F. लग्नैः for भङ्गैः. A. सखी for सती. A. B. यैः for यत्.

ललितलवलीभङ्गैरङ्गैर्वनं चलिता सती
जनकतनया पाणौ धृत्वा न यद्विनिवारिता ॥ ३३ ॥

105 गङ्गा। विहस्य। सखि कथं परोक्ष इव समक्षेऽपि नितान्तमुपालभसे।

106 यमुना। तदो तदो।

107 हंसः। ततः शबरशरदलितविन्ध्यकरिकुम्भतटीविमुक्तमुक्ताफलप्रकरकोरकिततीरलतावितानपरिच्छदां शर्मदां नर्मदामतीत्याचिरेण चपलकर्णाञ्चलपरिमिलितमदकरिकपोलचलितसहचरसमागममुदितमधुकरवधूमधुररसकुसुमकेसरं गोदावरीपरिसरं प्रयाताः।

108 यमुना। हद्धि हद्धि। तत्थ हि लङ्केसरबहिणीत्तणेण मत्ता सुप्पणहा णाम रक्खसी परिब्भमइ।

109 हंसः। अतिमत्तेति वक्तव्यम्। सा हि सौमित्रिशरदलितनिजनासिकारुधिरसीधुरसमास्वादितवती।

---

106 ततस्ततः।

108 हा धिक् हा धिक्। तत्र हि लङ्केश्वरभगिनीत्वेन मत्ता शूर्पणखा नाम राक्षसी परिभ्रमति।

---

105. D. om. विहस्य & कथम्. A. परोक्षवत्प्रत्यक्षे. All except C. E. उपालम्भसे.

107. A. om. हंसः. A. B. G. ततश्च. D. ललित after दलित. A. मुक्त. A. D. G. तारकित for कोरकित. D. om. °तीर ... चलित°. C. E. F. वन for वितान. A. C. E. F. om. शर्मदाम्. B. समागमागम. D. om. मधुर. C. E. F. D. स्वरस & G. सरस after मधुर. B. G. om. रस. D. °केसर. A. B. तीरम् for परिसरम्.

108. D. om. one हद्धि. C. E. F. om. हि. B. लङ्केस A. °त्तेण & B. G. क्खणेण in place of °त्तणेण. D. G. पमत्ता.

109. G. °पमत्ता. A. B. शस्त्र for शर. B. °रसं समा° C. E. F. सीधुसीकरम्.

110 गङ्गा । सातङ्कं तदाकर्ण्य । किं प्रतिपन्नं जनस्थानवासिना निशाचरचक्रेण ।

111 हंसः । करकलितकरालकुन्तकरवालकार्मुकेण निशाचरचक्रेण रामं प्रति प्रचलितम् ।

112 गङ्गा । ततस्ततः ।

113 हंसः । ततश्चेदं विज्ञप्तः सौमित्रिणा रामभद्रः । आर्य अयं मे

नक्तंचरेन्द्रभगिनीसुकुमारनासा-
निर्मुक्तरक्तलवलिप्तशितैकधारः ।
उत्कण्ठते कठिनराक्षसकण्ठजानां
पानाय कर्दमसृजामसृजां कृपाणः ॥ ३४ ॥

इदमुक्तं च रामभद्रेण । वत्स अस्त्येतत् । किंतु प्रकृतिभीरुः खल्वबलाजनः । तेनहि जानकीसनाथगर्भां पर्णशालामेव समुत्खातकरवालः पालयतु भवान् । अमहमचिरादित्यर्धोक्त एव निशाचरचक्रं प्रति प्रचलितः संमीलितश्च ।

114 गङ्गा । सत्रासम् । अनन्तरं किं वृत्तम् ।

115 हंसः ।

अथाहूतस्तादृक्समरजयसंरम्भरभस-

---

110. C. E. F. समाकर्ण्य. D. तत्समाकर्ण्य. B. जनस्थाननिवासिभिः किं प्रतिपन्नं निशाचरैः. D. प्रसन्नम् for प्रतिपन्नम्. A. निवासिना.

111. A. B. करवालकुन्त. B. रामं प्रति प्रचलितं निशाचरचक्रेण. A. om. निशा...चक्रेण. A. रामभद्रम् & चलितम्.

112. B. om. one ततः.

113. C. om. हंसः. A. D. रामचन्द्रः. A. पानीय. A. B. रामचन्द्रेण. D. रामेण. D. om. समुत्खात ...वालः. F. अहमहम्. D. om. प्रति. A. चलित.

115. D. तावत् for तादृक् ... B.

प्रसर्पद्गम्भीरध्वानिगरिमगर्जद्दशादिशा ।
मुहूर्तात्सौमित्रिः

116 सरयूः । तत्किं रामेण ।

117 हंसः । नहि नहि ।

118 सरयूः । अयि देवि भागीरथि परित्रायस्व माम् । नूनं निशाचर-चक्रेणेति वक्ष्यति ।

119 हंसः ।

विपिनचरनक्तंचरचमू-
वधक्रीडाकिञ्चिन्मुकुलितरुषा रामधनुषा ॥ ३५ ॥

120 सरयूः । दिष्ट्या जीवितास्मि । सेयं प्रथमदर्शिततीव्रातपा पीयूषवृष्टिः ।

121 यमुना । तदो तदो ।

122 हंसः । ततः प्रमुदितमुनिजनवदनशतसमुद्गतसाधुवादश्रवणविनोदेन कतिचिदहानि नयन्ति स्म ।

अथाविरासीत्कुरुविन्दलोचनो
द्रुमान्तरे विद्रुमशृङ्गशोभितः ।
विभक्तमुक्तामयचित्रमण्डनो
मनोपहारी हरिणो हिरण्मयः ॥ ३६ ॥

---

121 ततस्ततः ।

---

°दिशः & G. °दिशम्.

116. C. E. वृत्तम् & F. निवृत्तम् after किम्.

118. G. त्रायस्व. B. निशाचरेण.

119. D. रुचा for रुषा.

120. D. तीव्रतापा.

122. A. स after ततः. G. om. वदन. A. B. G. समुद्गत. A. B. D. कानिचित्. A. बिन्दु for शृङ्ग. C. D. E. F. विमुक्त for विभक्त.

123 गङ्गा। स्वगतम्। नूनमयमनर्थाङ्कुरोद्भेदः। प्रकाशम्। ततस्ततः।

124 हंसः।

भ्रूवल्लीविजितमनोजचारुचाप-
श्चापश्रीजितयुवतीमनोहरभ्रूः।
सीतायास्तमनुससार लोचनान्तः
कान्तश्च स्फुरदसितोत्पलाभिरामः॥ ३७॥

ततः।

त्रासातुरेण हरिणेन सहैव तेन
दूरं प्रयाति हृदये जनकात्मजायाः।
सौमित्रिराश्रमपदाद्धृतचापपाणि-
र्द्राङ्निर्जगाम च विवेश च कोऽपि भिक्षुः॥ ३८॥

125 गङ्गा। ततस्ततः।

126 हंसः। ततश्च।

इतो बाणं रामः क्षिपति हरिणे मुक्तकरुणः
सचापः सौमित्रिः स्वजनमनुयाति द्रुतमितः।
इतः सीताभिक्षामुपनयति भिक्षोः करतले
त्रयं व्योम्नि प्रेङ्खन्युगपदहमालोकयमिदम्॥ ३९॥

127 सरयूः। ततस्तः।

---

123. D. G. om. उद्भेद.

124. B. ततः & C. E. ततश्च before भ्रूवल्ली°.

A. चापम्. D. G. मनोरमश्रीः. A. तदनु & लोचनान्तम. A. B. गङ्गा। ततस्ततः। हंसः। after °भिराम°, & om. ततः. B. D. G. कृत for धृत.

126. A. om. ततश्च. G. om. च. B. उपयाति.

128 हंसः । ततः

कनकहरिणगात्रे बाणपातावलोका-
द्विमुखहृदयवृत्तिर्लोचने संनिमील्य ।
कथयितुमयि चेदं रामवृत्तान्तजातं
शरयु तव तटान्तं तूर्णमेवावतीर्णः ॥ ४० ॥

तदनुजानीत मां देव्यः सलिलावगाहनाय । श्रान्तोऽस्मि ।

129 तिस्रः ।

चिरमारम रमणीये शुचिपयासि स्मेरनीरजे सरसि ।
पुरतरुणीचरणरणन्मणिनूपुरकूजितोत्कुतुकः ॥ ४१ ॥

130 हंसः । प्रणम्य निष्क्रान्तः ।

131 गङ्गा । सखि सरयु अनेन वृत्तान्तक्रमेण कातरं मे मनः ।

132 सरयूः । भगवति अलं कातरतया । अनेन हि नूपुरोद्भेदेन स्मृतं मया यत्किल वनगमनोद्यतां जानकीमिदमुक्तवती करकलितनूपुरद्वया पतिव्रता सीमन्तिनीरत्नमरुन्धती ।

अधिचरणममू चमूरुनेत्रे
मृदुरणितौ मणिनूपुरौ विधेहि ।

128. D. om. हंसः. A. B. om. ततः. A. तटवटान्तम्. D. एत्य for एव. C. D. E. F. तत· for तत्.

129. A. B. गङ्गा for तिस्र. B. D. चिरमात्मनि & G. विहरास्मिन् for चिरमारम. D. वयसि for पयसि, & पयसि for सरसि. A, om. स्मेर...सि & चरण. B. मधुर before कूजित C. मधुजित, D. कूजन, E. मधुरस्वजित & F. स्वजित for कूजित.

130. D. om. हसः.

131. A. adds इतः सीता before सखि, & reads सरयू.. A. B. हृदयम् for मनः.

132. D. G. om. भगवति. A. B. G. add ननु before अनेन. A. B,

अहरपि विरहं न यन्महिम्ना
हरिणदृशः सह वल्लभैर्लभन्ते ॥ ४२ ॥

कृतवती च तथा जानकी ।

133 गङ्गा । इदानीं किमपि निर्वृतास्मि । सत्यवादिनी हि मे सखी वसिष्ठगृहमेधिनी । तदागच्छ । इमं वृत्तान्तं रघुकुलवत्सलाय सागराय निवेदयाम । इति परिक्रामन्ति ।

134 गङ्गा । सविस्मयम् । प्रवाहवेगातिशयात्तत्क्षणादेव दूरमायाताः स्मः । यदयमदूर एव गोदावरीसहचरः किमपि समालपन्नालोक्यते कल्लोलिनीकान्तः ।

ततः प्रविशति गोदावरीसहचरः सागरः ।

135 सागरः । ततस्ततः ।

136 सरयूः । कथमिहापि किमपि वृत्तान्तशेषः प्रस्तूयते ।

137 यमुना । अवि णाम तं जेव्व हविस्सदि जं किर हंसेण णावगदम् ।

---

137 अपि नाम तदेव भविष्यति यत्किल हंसेन नावगतम् ।

---

om. हि. A. F. om. मया. B. कलकलित. D. सीमन्तिनीनाम्. C. E. सीमन्तिनीसीमन्त. F. °नेत्रि.

133. A. B. जीविता. F. मे हि. G. यत् for तत्. A. G. आगच्छत. A. B. वृत्तान्तमिमम्. B. निवेदयामि. निष्क्रामान्ति.

134. D. सरयूः for गङ्गा. A. जल for वेग. D. जवातिशयः for प्रवाह ..शयात्. C. E. क्षणम् for क्षणादेव. D. G. उपयाता॰. B. C. E. F. om. सागरः. A. om. किमपि... up to ततस्ततः in 137. D. समापतन्.

135. C. D. om. सागरः for which E. has सरयूः. D. om. one ततः.

136. A. B. गङ्गा for सरयूः. B. om. अपि. A. om. the 2nd अपि. D. वृत्तान्त॰. A. प्रसूयते.

137. C. E. भणिस्सदि for हविस्सदि. C. हंसवअणादवगदं. F. हंसेण णावगदं. A. adds ततः प्रविशति गोदावरी after णावगदम् ।

138 गोदा० । ततः

रामोन्मुक्तैकबाणप्रणिहतहृदयः काञ्चनाङ्गः कुरङ्गः
सद्यो मारीचनामाजनि रजनिचरः सांद्ररक्ताक्तवक्षाः ।
भिक्षुः सोऽपि क्षणार्धान्मणिखचितचलत्कुण्डलश्रेणिशोचि-
र्वीचीखेलत्कपोलस्फुरितदशशिराः कुम्भकर्णाग्रजोऽभूत् ॥ ४३ ॥

139 गङ्गा । हा हतास्मि । विमृश्य । अथ वास्ति तन्मणिनूपुरद्वयम् ।

140 सागरः । अपि नाम न स्पृष्टा मम वधूटिका निशाचरेण ।

141 गोदा० । न स्पृष्टा ।

142 सागरः । कथमिव ।

143 गोदा० । तथाहि

रजनिचरकराग्रस्पर्शसंपातविघ्नं
रचयितुमनुसूयाहस्तदत्ताङ्गरागात् ।
बहलमनलपुञ्जः पिञ्जरज्योतिरुद्य-
त्कुवलयदलशीतां संवृणोति स्म सीताम् ॥ ४४ ॥

144 सागरः । अहो अत्रिपत्न्यास्तपःप्रभावः ।

---

138. A. B. प्रतिहत. G. क्षणार्धेम्. A. शोभी & D. G. शोभा for शोचि॰. A. किंचिल्लेखत्. B. वीरः for वीची. D. लुलित for स्फुरित. A. दशशिरः.

140. A. reads after अपिनाम, अयि न स्पृष्टा मे वधूटिका निशाचरेण. B. G. मम वधूटिका स्पृष्टा निशाचरेण.

142. D. om. सागरः....तथाहि in 143.

143. D. दत्तहस्ताङ्ग॰ B. G. ॰रागाम्. F. पिञ्जरम्. B. द्योतिः for ज्योति॰. A. उद्यन् & रूपम्.

145 गोदा० । ततो वरुणमन्त्रचिन्तनाहूतनूतनबलाहकाञ्चलनिचुलितपाणिरस्पृशदेव ।

हा राम हा रमण हा जगदेकवीर
हा नाथ हा रघुपते किमुपेक्षसे माम् ।
इत्थं विदेहतनयां मुहुरालपन्ती-
मादाय राक्षसपतिर्नभसा जगाम ॥ ४९ ॥

146 सरयूः । अयि भागीरथि कथमस्मद्भागधेयादरुन्धतीवाचोऽपि मृषा भविष्यन्ति ।

147 गङ्गा । नहि नहि ।

148 सागरः । सविषादम् । ततस्ततः ।

149 गोदा० । ततः शैलशिखराधिवासिना विहगराजेन जटायुना पन्थानमवरुध्येदमुक्तो राक्षसेन्द्रः ।

आः पापिन् पश्यतो मे रघुतिलकवधूं चोरवृत्त्यापहर्तुं
सीतां शीतांशुलेखामिव गिरिशशिरःशायिनीमुद्यतोऽसि ।
एष च्छित्त्वा शिरांसि प्रखरनखमुखैर्दीप्तचूडामणीनि
त्वामद्याहं गरुत्मानुरगमिव सुधाकाङ्क्षिणं संहरामि ॥ ५० ॥

150 गङ्गा । स एष नूपुरप्रसादः ।

---

145. A. चिन्ता. D. अस्प्राक्षीत्, & श्वशुर for रमण.

146. A. om. कथम् & has अभागधेयम्. D. मिथ्या for मृषा.

147. D. om. one नहि.

148. G. om. one ततः.

149. A. B. °शिखरवासिना. A. D. G. विहङ्ग° C. E. F. जटायुषा. C. E. F. चौर.° D. एतत् for एष, & चूडामणिभिः.

150. D. एव. A. °प्रभावः.

151 सागरः । सहर्षं । ततस्ततः ।

152 गोदा० । ततः

नखैस्तदीयैः कुलिशात्कठोरै
भिन्दद्भिरङ्गानि निशाचरस्य ।
रथः स हेमाभरणो बभञ्जे
न जानकीलाभमनोरथोऽस्य ॥ ४७ ॥

153 सागरः । ततस्ततः ।

154 गोदा० । ततश्च निशितनखनिस्त्रिंशनिपातभैरवे समरसंरंभे संभ्रमकातरायां च रावणैककरावस्थितायां जानक्याम् ।

तस्याः क्वणत्किमपि नूपुर एक एव
क्रन्दन्निवातिकरुणं चरणात्पृथिव्याम् ।

155 गङ्गा । हा अधुना निराशाः स्मः ।

156 गोदा० ।

आस्तिष्ठ तिष्ठ निहतोऽसि खलेति जल्पन्
दूराज्जटायुरपि खड्गहतः पपात ॥ ४८ ॥

157 सागरः । हा वत्से नूनमधुना नीतासि निशाचरेण । इति मूर्छति ।

---

151. A. ततश्च ततः.

152. B. D. G. om. ततः. D. बभञ्ज. C. E. F. नो for न. A. B. तु for अस्य.

153. D. सहर्षम् after सागरः. A. G. om. one ततः.

154. C. E. om. श्च. B. D. शित for निशित. B. नखर. D. G. निर्घात for निपात. A. भरे & D. भैरव for भैरवे. C. E. F. समारम्भे. D. समरसंभ्रम°. B. D. G. om. च after °कातरायाम्. A. D. G. स्थितायाम्.

155. F. सरयूः for गङ्गा. C. D. E. F. om. हा.

156. D. om. गोदावरी.

157. G. adds जानकि after वत्से. D. om. नूनमधुना & has नीता नीतासि. B. मूर्छितः पतति.

158 गङ्गा । उपसृत्यांशुकाञ्चलेन वीजयन्ती । अये रघुकुलवत्सल समाश्वसिहि समाश्वसिहि ।

159 सागरः । समाश्वस्य । कथमिह गङ्गापि ।

160 गङ्गा । यमुनासरय्वौ च ।

161 सागरः । तन्मां मिलिताः सर्वा एवावधारयत । अयमहं हतोऽस्मि शोकस्रोतसा ।

162 गङ्गा । अलमतिकातरतया । यतः

प्रायो दुरन्तपर्यन्ताः सम्पदोऽपि दुरात्मनाम् ।
भवन्ति च सुखोदर्का विपदोऽपि महात्मनाम् ॥ ४९ ॥

163 सरयूः । सखि गोदावरि अपि जानासि नूपुरवृत्तान्तम् ।

164 गोदा० । अथ किम् । कथितं मे वनदेवतया । तमादाय कोऽपि कपिर्ऋष्यमूकसंमुखं गत इति ।

165 सागरः । रामभद्रस्य तु को वृत्तान्तः ।

166 गोदा० । रामभद्रोऽपि सीताविरहविह्वलः सौमित्रिणा धार्यमाणस्तामेव दिशं प्रतस्थे ।

---

158. B. G. अन्तेन for अञ्चलेन. A. अयि.
159. D. G. om. समाश्वस्य.
161. A. D. G om. अव.
162. A. अलमलम्. G. हि for च.
163. D. om. अपि & adds तस्य after जानासि. A. adds. तस्याः after जानासि. C. E. F. नूपुरस्य.
164. All except D. G. om. अथ किम्. F. G. एव for मे. B. ऋष्यमूकं प्रति गतः & om. इति. A. °संमुखगतः.
165. D. om. तु.
166. A. B. D. G. om. अपि. A. adds च after सौमित्रिणा. C. E. F. अवधार्यमाणः.

167 नेपथ्ये । सखि कालिन्दि वर्धसे ।

168 यमुना । का उण इमा सूइसलाआविद्धाइं मह णहाइं अलत्तअरसेण सिञ्जदि ।

169 प्रविश्य तुङ्गभद्रा । जयतु जयतु नदीनाथः ।

170 सागरः । कथं पुनर्वर्धते कालिन्दी ।

171 तुङ्ग० । भ्रातुः सुग्रीवस्य कपिचक्रवर्तिपदलाभेन ।

172 यमुना । दाणिं चन्दणचण्डातपलिम्पन्तपासजुअला वट्टामि ।

173 सागरः । कथं पुनर्वालिपालिता कपिराज्यलक्ष्मीः सुग्रीवमनुसंक्रान्ता ।

174 तुङ्ग० । कथमद्यापि वालिकथा ।

175 सागरः । कथमिव ।

176 तुङ्ग० । ननु नूपुरप्रदानविश्वासिते रामभद्रे आत्मानं सुग्रीवं समर्पयता तथा व्यवसितं हनूमता यथा

---

168 का पुनरियं सूचिशलाकाविद्धानि मम नखान्यलक्तकरसेन सिञ्चति ।

172 इदानीं चन्दनचण्डातपलिप्यमानपार्श्वयुगला वर्ते ।

---

168. D. क for का & णभणाइं for णहाइं. C. D. F. अलत्त.

169. D. om. one जयतु.

170 A. वर्धसे.

171. G om. कपि. D. °पदस्त्वेन.

172. D. °लिप्पन्त्तग. C. वद्दामि for वट्टामि.

173. A. °पालितवानरराजलक्ष्मीः. G. adds अपि after °पालिता. All except G. अनुक्रान्ता.

175. D. om. this speech.

176. D. om. तुङ्गभद्रा. A. om. ननु. B. G. विश्वासितेन रामचन्द्रेण. A. रामचन्द्रे. D. adds च after आत्मानम्. B. G. हनूमता तथा व्यवसि-

सहेलं हत्वैनं हरिणमिव हैमं रघुपतिः
कपीनां साम्राज्ये प्रणतमभिषिञ्चन्नविस्मृतम् ।
अपि ध्वंसाच्छत्रोर्नृपतिमपि चक्रे फलभुजा-
मपि प्रीतं चक्रे निजकुलगरिष्ठं दिनकरम् ॥ ९० ॥

177 सागरः । ततः किं वृत्तम् ।

178 तुङ्ग० । ततश्च सुग्रीवेणापि

परिम्लानां मालामिव ललितसौरभ्यरहिता-
मपि स्थाने स्थाने विचिनुत वधूटीं दिनमणेः ।
इति स्वेनैवोक्ताः कुमुदनलनीलाङ्गदमुखा
हनूमत्संयुक्ता दिशि दिशि नियुक्ताः कपिभटाः ॥ ९१ ॥

179 सागरः । इदानीमुज्जीवितोऽस्मि ।

180 गोदा० । किं भवानेव । नन्वयमिदानीमखिलोऽपि जीवितो जनः ।

181 सागरः । एवमेतत् । सकलजनमनःसाधारणी हि रामचन्द्रमाधुरी । नन्विहैव पश्य

नेदीयसी हि सरयूस्तपनोद्भवेयं
भागीरथीयमुदयः सगरान्ममापि ।

---

सम्. D. इमम् for एनम्. B. प्लवग for प्रणत. A. साक्षात् for ध्वंसात्. All except B. G. have सख्युः for शत्रोः. C. D. E. F. पल for फल. B. दिनपतिम्. C. E. F. दिनमणिम्.

178. G. om. च. A. B. G. om. अपि. A. सहिता for रहिता.

A. B. इतस्ते for इति स्वेन. A. गज for नल.

180. A. B. G. om. अयम्. F. om. अपि. B. जीवलोकः for जीवितो जनः. F. लोकः for जनः.

181. B. om. हि. A. has thus तद्वत्स...लामीपि वामपि स्विन्नवृत्तिः &

इत्यन्वयाद्रघुकुले यदि पक्षपात-

स्तद्वत्सला किमपि वामपि चित्तवृत्तिः ॥ १० ॥

सविस्मयमूर्ध्वमवलोक्य ।

विलासैर्दम्भोलेर्दलितगरुतः सर्वगिरयः

स चैको मैनाकः पयसि मम मग्नो निवसति ।

अये कोऽयं शैलः स्फुरदमितगव्यूतिमहिमा

हिमाद्रिर्विन्ध्यो वा लघुतरगतिर्लङ्घयति माम् ॥ ११ ॥

तदागच्छत । निपरूपयामस्तावत्कोऽयमिति ।

इति निष्क्रान्ताः सर्वे ।

इति पञ्चमोऽङ्कः ।

---

has अद्भुत for अमित. D. गर्वातिम-हिमा. A. अयम् for वा. D. आगच्छ. C. E. F. आगच्छत तम्. B. C. E. F. om. इति before निष्क्रान्ताः.

# ॥ षष्ठोऽङ्कः ॥

ततः प्रविशतो रामलक्ष्मणौ ।

1 रामः ।

सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते

2 लक्ष्मणः ।

चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति ।

3 रामः ।

वत्सैतद्विदितं कथं नु भवता

4 लक्ष्मणः ।

धत्ते कुरङ्गं यतः

5 रामः ।

क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि ॥ १ ॥

पुनर्विलोक्य । हन्त सन्तापेन प्रतारितोऽस्मि । कथमयं गगनतलाधिरोही रोहिणीहृदयनन्दनश्चन्द्रः ।

चन्द्रं प्रति ।

रजनिकर करास्ते बान्धवाः कैरवाणां
सकलभुवनचेष्टाजागरूका जयन्ति ।
कथयसि न कथं तत्कुत्र सा जानकी मे
त्वमपि मृगसहायः किं च नक्तंचरोऽसि ॥ २ ॥

---

5. D. °रोहिणी रोहिणी.° C. E. F. रोहिणीरमणः. A. B. D. G. न कथयसि. G. असि for अपि. B. न & A. D. G. नु for च.

6 लक्ष्मणः । स्वगतम् । अये कथमयमभिषङ्गतरङ्गस्तरलीकरोत्यार्यमानसम् । तदन्यतो नयामि । प्रकाशम् । आर्य अयमितो विलोक्यतां चपलचञ्चुपुटाचान्तशीतकराकिरणशीकरश्चकोरः ।

7 रामः । चकोरं प्रति ।

हं हो विदेहतनयावदनं निवेद्य
भ्रातश्चकोर कुरु मां चरितार्थवृत्तिम् ।
पीता यदीयकमनीयकपोलकान्तिः
कान्तासखेन भवता शशिनं विहाय ॥ ३ ॥

8 लक्ष्मणः । आर्य इयमितो विलोक्यतां शरत्कृशा निशाकरकिरणानुकारतरङ्गा तरङ्गिणी ।

9 रामः । विलोक्य ।

कल्लोलिनि त्वमिव सापि तरङ्गनेत्रा
नूनं कमप्यनुदिनं कृशिमानमेति ।
एतावदस्ति भवतीह निसर्गशीता
सीता पुनर्वहति कामपि तापमुद्राम् ॥ ४ ॥

10 लक्ष्मणः । इतो विलोक्यतामनिद्रनीलनलिननिलीनोऽयमलिनीनाथः ।

---

6. C. om. स्वगतम्. D. G. om. अये. A. om. अयम्. B. अभिषङ्गसङ्गरङ्गः. A. चेतः. C. F. om. प्रकाशम्. C. E. F. om. आर्य & put it before चपल.° B. अत्र for त्रि. A. om. कर. B. G. om. किरण.

7. A. B. D. G. तन्मे for हंहो. B. वचनम् for वदनम्. C. D. E. F. चित्तम् for वृत्तिम्.

8. C. D. E. F. om. आर्य. A. परम् for अयम्. A. निशाकरण. A. B. °अनुकारा तराङ्गिणी. G. अनुकारितरङ्गा.

9. A. B. अपि for इव. A. B. G. कुरङ्ग for तरङ्ग. C. E. G. किमापि. B. तनिमानम्; & हि for इह.

10. A. अतिशीतल for अनिद्रनील. A. G. नलिनी°. D. वनप्रलीनः. F. प्रलीनः & G. विलीनः for निलीनः.

11 रामः । विलोक्य ।

उन्मीलन्नयनान्तकान्तिलहरीनिष्पीतयोः केवला-
दामोदादवधारणीयवपुषोः कान्तासखेन क्षणम् ।
यत्कर्णोत्पलयोः स्थितेन भवता किंचित्समुद्गुञ्जितम्
भ्रातः षट्पद कुत्र तत्कथय मे कान्तं प्रियाया मुखम् ॥ ९ ॥

12 लक्ष्मणः । सातङ्कम् । अपीमं न विलोकयेदार्यः ।

13 रामः । विलोक्य । अये कोऽयं विहङ्गः

योऽयं बहिः कलितकुङ्कुमरेणुराग-
मन्तस्तु संभृतदयं हृदयं दधानः ।
पारेतरङ्गिणि मुहुः करुणं रटन्ती-
मालोकते सहचरीं न तु संनिधत्ते ॥ १ ॥

विमृश्य । नूनमयं वल्लभाविरहविदारितहृदयो वराकश्चक्रवाकः ।

14 लक्ष्मणः । धिक् प्रमादः ।

15 रामः । नूनमयमेकः समदुःखतया समानशीलो मे । अथवा कुतोऽस्य मम च समानशीलता ।

अयमुदयति चन्द्रे विप्रयोगं प्रियायाः
श्रयति तपति सूर्ये सङ्गमङ्गीकरोति ।

---

11. G. reads अये कोऽयं विहङ्गः after विलोक्य, & वपुषौ for वपुषोः. B. समुङ्गुञ्जितम्. All except A. B. तिष्ठति for षट्पद. F. चित् for तत्. B. मुखं योषितः.

12. D. om. न. F. विलोकयति.

13. A. om. अये. F. विहङ्गमः. F. रागरेणुम्. A. रामम् for रागम्. A. दारित & C. E. चिरदारित.

14. A. B. G. अहो for धिक्.

15. A. C. E. समान for सम. A. ममास्य. B. मया for मम. A. B.

मम तु जनकपुत्रीविप्रयुक्तस्य यातं
शतमधिकमपीदं चन्द्रसूर्योदयानाम् ॥ ७ ॥

16 लक्ष्मणः । आर्य इह तावन्मुकुलितकमलिनीपरिसरानुसारिणि कलहंसके दीयतां दृष्टिः ।

17 रामः । विलोक्य ।

निजनखशिखालेखालढिस्फुरत्कमलस्तनीं
विरलमधुपश्रेणीगीतां चलः कलहंसकः ।
अकरुणशशिप्रेङ्खत्पादप्रहारविमूर्छिता-
महह नलिनीं क्लान्तां कान्तो मुहुर्मुहुरीक्षते ॥ ८ ॥

विमृश्य । वरमेवंविधानामपि सहचरीजनानुकम्पाकोमलं चेतो न तु निसर्गकाठिनस्य रामस्य ।

18 लक्ष्मणः । स्वगतम् । कथमिदानीमप्यस्य चेतसि जानकीमयमिन्द्रजालमुन्मीलति ।

19 नेपथ्ये । सखे रत्नशेखर चिराद्दृश्यसे ।

20 लक्ष्मणः । आकर्ण्य । किमेतत् ।

21 पुनर्नेपथ्ये । वयस्य चम्पकापीड एवमेतत् । मया ह्रीयन्तं समयमखिलमायानिधर्मयनाम्नो दानवस्य पुत्रीं निजसहोदरीं मन्दो-

---

om. च. C. D. E. F. जातम् for यातम्.

16. B. om. आर्य. D. F. G. कलहंस.

17. B. चलत् & A. G. चलन् for चल॰. A. D. अरुणशिशिर for अकरुणशशि. D. F. कान्तः क्लान्ताम् & G. क्लान्तक्लान्ताम्. A. om. विमृश्य. A. B. G. अनुकम्पया. A. मन॰ for चेतः.

18. A. B. om. स्वगतम्. A. B. आर्यस्य for अस्य. B. मनसि. B. G. जानकीयम्. C. F. समुन्मीलति.

20. B. adds आर्य before किम्.

21. B. सुप्रीतेन in place of पुत्रीम्. F. लङ्कायाः. A. कृतालयाम्. C. F.

दरीमनुवर्तितुं लङ्कायां कृतालयाच्चित्ररूपनाम्नो दानवात्सकलमिन्द्रजालकमाददानेन स्थितम् ।

22 लक्ष्मणः । नूनमयं कृतकर्णकौतुकामोदः कयोरपि विद्याधरयोः संवादः ।

23 पुनर्नेपथ्ये । सखे रत्नशेखर तन्मे धारयासि निजकलादर्शनमिति ।

24 पुनर्नेपथ्ये । वयस्य चम्पकापीड

असुरसुरनिशाचरोरगाणा-
मपि नरकिंनरसिद्धचारणानाम् ।
सकलजनविलोकनैकचित्रं
स्फुटमिह कस्य विजृम्भतां चरित्रम् ॥ ९ ॥

अथवा किमन्येन । लङ्कानुभूतमेव नूतनं किमपि सरसरमणीयं चरितमुपदर्शयामि ते ।

25 लक्ष्मणः । आर्य इतोऽवधार्यताम् । नन्विदमयत्नोपनीतं प्रेक्षणीयम् ।

26 रामः । अनाकर्णितकेन ।

देवि त्वदीय मणिनूपरजृम्भमाण-
कोलाहलोत्तरलहंसकुलाकुलासु ।

---

सकलाम्. D. सकल. C. E. जालकलाम्. A. जालमादाय.

22. F. om. कृत. C. D. E. F. पथिकयोः for विद्याधरयोः.

23. A. तथा for तत् & कारयासि for धारयासि, or which F. has दर्शयासि.

24. C. E. °सुरभुजङ्गचारणानाम्. F. विजृम्भितम् & G. विजृम्भते. A. om. नूतनम्.

26. After the first two lines of the stanza A. has आर्य क्व पुनरिह गोदावरी कुत्र वैदेही & then रामः। विमृश्य। कथं मता &c. which is

वैदेहि लक्ष्मणपदाम्बुजलाञ्छितासु
गोदावरीपुलिनभूमिषु देहि दृष्टिम् ॥ १० ॥

27 लक्ष्मणः । आर्य क्व पुनरत्र वैदेही क्व वा गोदावरी ।

28 रामः । विमृश्य । कथं प्रतारितोऽस्मि मतिविभ्रमेण । विचिन्त्य । अथ वा कृतार्थीकृतोऽस्मि । अनेन हि

गोदावरीतीरतपोवनेषु
सौमित्रिसीतापरिपूर्णपार्श्वैः ।
मुदा निमेषानिव यान्यनैषं
दिनानि तान्येव पुनः स्मृतानि ॥ ११ ॥

पुनः समत्याशम् । अपि नाम

तान्येव पक्ष्मलदृशो वचनामृतानि
भूयोऽपि कर्णचुलुकैरहमापिबेयम् ।
यैर्मामदर्शयदसौ विकसत्प्रमोदा
गोदावरीकमलवीचिविचेष्टितानि ॥ १२ ॥

29 नेपथ्ये ।

तुह सुहअ उक्खिवन्ती तरङ्गसिअचामरं रहुमिअङ्क ।

---

29 तव सुभग उत्क्षिपन्ती तरङ्गसितचामरं रघुमृगाङ्क ।

---

followed by the last two lines of the stanza, after which, लक्ष्मणः । प्रतारितोस्मि मतिविभ्रमेण &c. *i. e.* speech 28. C. E. पदाङ्कितलैकतासु.

27. F. G. om. आर्य. A. B. F. G. इह for अत्र. A. गोदावरी क्वत्र वैदेहीति. F. कुत्र for क्व. D. om. वा.

28. A. B. G. मे after हि. C. E. F. कृतानि for स्मृतानि. A. om. अपि नाम. D. F G. विकच for विकसत्. A. F. प्रमोद.

29. C. E. उक्खिवइ. A. D. F. उक्खिवदि. A. °सीअ, & गोलावरी.

धअलकमलादपत्तं धारइ गोलाणई सहत्थेण ॥ १३ ॥

30 रामः । सहर्षम् । अये स एवायं प्रियतमायाः समालापः । तथा हि

परिमितकमनीयः कोमलो वाग्विलासः
सरसमधुरकाकुस्वीकृता कापि लेखा ।
ध्वनिरपि च विपञ्चीपञ्चमस्यानुवादी
श्रुतिरपि कलकण्ठीकण्ठसंवादमेति ॥ १४ ॥

तत्कुत्र पुनः प्रेयसी । विलोक्य । तत्कथमयमदृष्टचन्द्रलेखश्चन्द्रालोकः ।

ततः प्रविशति यथानिरूपयिष्यमाणा जानकी ।

31 रामः । ससंभ्रमम् । प्राप्तासि । इति गन्तुमिच्छति ।

32 लक्ष्मणः । रामं हस्ते धृत्वा । अलमिह संभ्रमेण । विद्याधरोपनीतमिन्द्रजालकं खल्वेतत् ।

33 रामः । निर्वर्ण्य । अये क एष संनिवेशविशेषः । तथा हि

एकेनालम्बितेयं शिथिलभुजलताशोभिनाशोकशाखा
हस्तेनान्येन चायं दिनकरकिरणक्रान्तकान्तिः कपोलः ।

---

धवलकमलातपत्रं धारयति गोदानदी स्वहस्तेन ॥

---

30. C. E. F. om. अये. C. E. वर्ती for वादी. A. हंसी for कण्ठी. C. D. E. F. कुतः for कुत्र. C. E. असौ after पुनः. C. D. E. F. om. अयम्. A. चन्द्रलोकः.

31. C. E. add इयं before प्राप्ता & om. असि.

32. A. om. रामम्. A. B. C. E. °जालम्. A. B. om. खलु.

33. D. G. शाखि for अशोक. B. D F. तुहिनकर for करकिरण. C. D. E. लुलित & F. ललित for लुलति. D. लक्र (?) for कण. A °कणः. B. लक्ष्म for पक्ष्म. D. F. G. om.

एष स्रस्तो नितम्बे लुठति कचभरस्त्यक्तकाञ्चीकलापे
नेत्रोत्सङ्गे च बाष्पस्तबकनवकणैः पक्ष्मला पक्ष्मलेखा ॥ १५ ॥

पुनर्विभाव्य । नूनमियमशोकशाखां सखीमिवावलम्ब्य निद्रामुपगता । तथा हि

आमीलन्नवनीलनीरजतुलामालम्बते लोचनं
शैथिल्यं नवमल्लिकासहचरैरङ्गैरपि स्वीकृतम् ।

पुनर्विमृश्य । नूनमनया हृदयप्रमोददायी कोऽपि स्वप्नो दृष्टः । तथा हि

आलापादधरः स्फुरन्कलयति प्रेङ्खत्प्रवालोपमा-
मानन्दप्रभवाश्च बाष्पकणिका मुक्ताश्रियं बिभ्रति ॥ १६ ॥

34 सीता । उन्मील्य लोचने । हद्धि हद्धि । अण्णारिसो मे जीअलोओ ।

गोलाणई कहिं सा णीलुप्पलसामलो कहिं रामो ।
लङ्का कहिं कहिं वा हद्धी रामेक्कजीविदा सीदा ॥ १७ ॥

इति मूर्छति ।

---

34 हा धिक् हा धिक् । अन्यादृशो मे जीवलोकः ।

गोदानदी कुत्र सा नीलोत्पलश्यामलः कुत्र रामः ।
लङ्का कुत्र कुत्र वा हा धिग् रामैकजीविता सीता ॥

---

पुनर्विभाव्य & add शाखि after अशोक. D. G. उपागता. A. om. तथाहि. A. लोचने. A. B. C. E. om. कोऽपि. A. adds अपि after स्वप्न°. A. B. G. स्फुरत्. A. किसलय for कलयति & कपोल for प्रवाल & °प्रभाव: (?).

34. A. om लोचने. A. B. om. मे. A. गोआवरी, & सो for सा. & adding सा after the first कहिं, om. कहिं ... मूर्छति. C. E. om. लङ्का कहिं. F. om. वा. C. E. repeat हद्धि.

रामः। अयि वसुधे

यां गर्भेण त्रिजगदबलारत्नभूतां दधाना
लब्धार्थत्वाज्जगति भवती रत्नगर्भा बभूव।
तामुत्सङ्गे तव विलुठितां वीक्षमाणापि सीतां
द्राग्दीर्णासीर्न कथमथ वा देवि सर्वंसहासि ॥ १८ ॥

तदेनामभ्यर्थयामि तावदस्याः समुद्बोधनाय। अथ वा किमभ्यर्थनया।

निजामपि सुतां सीतां नेयमुद्बोधयिष्यति।
निजेऽप्यपत्ये करुणा कठिनप्रकृतेः कुतः ॥ १९ ॥

तदेनं तावदभ्यर्थयामि।

स्निग्धाशोकद्रुम निजसखीं तूर्णमुद्बोधयैनां
सिक्त्वा सिक्त्वा किसलयकरस्रंसिना सीकरेण।
एतस्याः किं नयनकमलस्यन्दिभिः सान्द्रसान्द्रै-
र्बाष्पोत्पीडैरनुदिनमपि त्वं न सिक्तालवालः ॥ २० ॥

कथमनाकर्णितकेन प्रत्याख्यातमनेन। अये कृतघ्नता पलाशिनः। विलोक्य। कथं प्रकृतिप्रियंवदाया मे प्रियायाः सखीजनोऽपि न कश्चिदिह।

---

35. A. या for याम्. G. वै गर्भे for गर्भेण. C. D. E. F. लब्धान्वर्था. A. उत्सङ्गम्. G. विलुलिताम् & च for अपि. A. भग्ना for दीर्णा. A. B. G. आसीत्. A. अर्थयामि & एवम् for एनम्. D. सलिल for कमल. A. स्रंसिभिः for स्यन्दिभिः. B. त्वमसि यदहो किं for अनुदिनमपि त्वम्. D. असि for अपि. F. च for न. A. adds अयम् after कथम्. C. E. B. add एव after अनाकर्णितकेन. C. E F. अकृतज्ञता for कृतघ्नता. F. om. मे, A. प्रियाया मे.

36 प्रविश्य त्रिजटा । सखि जानकि समाश्वसिहि समाश्वसिहि ।

37 सीता । समाश्वस्य । कहं पिअसही मे तिअडा ।

38 त्रिजटा । सखि अनया ते मधुरया मुखरेखया तर्कयामि यत्किल प्रियं किमपि दृष्टवती भवती ।

39 सीता । अत्थि दाणिं हि मए सिविणअम्मि सअं गोलाणईए सहत्थकलिदतरङ्गचामरधवलकमलादवत्ताए परिचरिज्जन्तो अज्जउत्तो दिट्ठो ।

40 त्रिजटा । तर्हि वर्धसे । सुखस्वप्नः खल्वसौ ।

41 सीता । हळा केरिसो मे रामेक्कचित्ताए सिविणिअम्मि विस्सासो ।

42 त्रिजटा । तत्किं चिन्तास्वप्न इति संभावयसि । नहि नहि । चिन्तास्वप्नोऽपि नैवमचुम्बितावगाही भवति ।

---

37 कथं प्रियसखी मे त्रिजटा ।

39 अस्तीदानीं हि मया स्वप्ने स्वयं गोदानद्या स्वहस्तकलिततरङ्गचामरधवलकमलातपत्रया परिचर्यमाण आर्यपुत्रो दृष्टः ।

41 हला कीदृशो मे रामैकचित्तायाः स्वप्ने विश्वासः ।

---

36. All except A. B. om. सखि. A. om. जानकि.

37. F. मे पिअसही. A. om. तिअडा.

38. F. om. सखि. A. B. ते अनया. C. E. F. om. मधुरया. A. D. शोभया for रेखया. B. om. किल प्रियम् F. किमपि प्रियम्. A. om. किमपि. B. adds कौतुकम् before दृष्टवती. A. D. om. भवती.

39. B. C. E. F. om. हि. A. B. om. सअं. A. om. गोलाणई. B. गोदाणई. A. D. add. सिर before चामर. B. adds परअज्जीए before पारिचारिज्जन्तो. D. F. परिचन्दो. A. adds गोदावलीए before अज्जउत्तो.

41. G. om. हला.

42. A. adds स्वं स्थिता before चिन्ता°. B om. नहि नहि. G. one नहि. A. B. C. E. इह for अपि. C. E. F. om. नैवम्.

43 सीता। किं उण अचुम्बिदम्।

44 त्रिजटा। यन्न संभाव्यते।

45 सीता।

जं ण हु संभावीअदि तं पि हला अत्थि अत्त लोअम्मि।
णं जीवइ जणअसुदा अपुलोअन्ती वि राममुहचन्दम्॥ २१॥

ता किं इमिणा सिविणएण जीविदेण वा। उवेक्खिदह्मि अ-ज्जउत्तेण।

46 रामः। शान्तं पापम्। अयि प्रिये हृदयस्थितापि मे कथमजानती वर्तसे हृदयवृत्तिम्।

47 सीता। अह वा किन्ति हरमुउडमिअङ्के कलङ्कमारोपइस्सम्। जाणामि अज्जवि अज्जउत्तो अकलिदवुत्तन्तो मे।

---

43 किं पुनरचुम्बितम्।

45 यन्न खलु संभाव्यते तदपि हला अस्त्यत्र लोके।
ननु जीवति जनकसुतानालोकयन्त्यपि राममुखचन्द्रम्॥

तत्किममुना स्वप्नेन जीवितेन वा। उपेक्षितास्म्यार्यपुत्रेण।

47 अथ वा किमिति हरमुकुटमृगाङ्के कलङ्कमारोपयिष्यामि। जानाम्यद्याप्यार्यपुत्रोऽकलितवृत्तान्तो मे।

---

44. A. न खलु for यन्न. F. adds ते after संभाव्यते.

45. D. उण for ण हु. A. हला तंपि. B. वावएत्थ for अत्त. F. अभलोअम्मि for अत्यलोअम्मि. G. जं for णं. D. अवलोअन्ती. F. अ for वि. A. om. चन्द. G. °चन्दमुहम्. A. om. ता. C. E. सिविणे after which E. adds सा. A. om. जीविदेण...°उत्तेण.

46. A. F. repeat शान्तं पापम् & have हृदि for हृदय. B. om. मे. B. F. इव before वर्तसे. B. मे after वर्तसे. A. D. °वृत्तम्.

47. C. E. वि after °मिअङ्के. A. आरोवस्सम्. A. B. om. अज्जउत्तो. G. अज्जउत्तो अज्जवि. A. B. अज्ज-उत्तो after मे.

48 रामः । प्रिये इदानीमुचितमनुसंदधासि ।

49 सीता । विमृश्य । कहं ।

50 नेपथ्ये । अये लङ्कानिवासिनः सावधानमवस्थीयताम् । नन्वितः

प्राकारमुन्नतमसीमबलो विलङ्घ्य
लङ्कामयं विशति कोऽपि कपिप्रवीरः ।

आकर्ण्य सर्वे त्रासं नाटयन्ति ।

51 पुनर्नेपथ्ये । अये लङ्काधिवासिनः अलं त्रासेन ।

तत्संमुखं प्रचलितः स्वयमक्षनामा
नन्वेष राक्षसपतेः कुपितः कुमारः ॥ २२ ॥

52 सीता । कहं उण सह महीहरेण वेवदिञ्व असोअवणम् ।

53 त्रिजटा । विमृश्य ।

तुहिनकरमयूखैर्दीप्तकन्दर्पदर्प-
स्तपनकुलवधूटीं त्वामयं मुक्तलज्जः ।

---

49 कथम् ।

---

48. C. D. E. F. om. प्रिये. B. अये. C. E. अभि for अनु. A. °संदधामि.

49. B. कहं वा. C. E. वाआलेण णेऊररएण वि कहिदा णाहं णाहस्स.

50. B. उपैति किल for अयं विशति. C. E. have for the 2nd line प्राप्तोरुषारुणितदृक्कपिवीरउच्चैः & D. F. प्राप्तस्त्वराविहितरोषकपिप्रवीरः. G. has उभे & नाटयतः. F. D. उच्चैः before त्रासम्.

51. C. D. E. F. om, पुनर्नेपथ्ये. A. om. अधि. D. G. om. अये ... त्रासेन. B. D. G. प्रचलति.

52. G. महीअलेण. A B. add. इमं before वेवदिञ्व & सअ before असोअ°.

53. B. मयूषैः & D. मयूखः. A.

अयमयमनुनेतुं रामचन्द्रैकचित्ता-
मपि स विपिनवीथीमेति लङ्काधिनाथः ॥ २३ ॥

54 सीता । त्रासं नाटयति ।

ततः प्रविशति रावणः ।

55 सीता । पराङ्मुखी तिष्ठति ।

56 रावणः । अयि जानकि

कन्दर्पज्वरवेदनापरिपतद्बाष्पस्रुतिक्षालितं
स्वर्गस्त्रीकुचकुम्भकुङ्कुमरजःस्तेयापराधोज्ज्वलम् ।
एतत्त्वां सुरदन्तिदन्तशिखरोल्लेखाङ्कविख्यापित-
प्रस्फूर्जच्चतुरन्तविश्वविजयं वक्षःस्थलं याचते ॥ २४ ॥

57 सीता । अनाकर्णितकेन । अवि णाम पुणोवि रामचन्दमुहचन्दं पुलोवइस्सम् ।

58 त्रिजटा । सखि जानकि । एवंप्रलापिनि लङ्केश्वरे कर्णविधानमपि तावद्देहि ।

59 रामः । साधु त्रिजटे । यत्प्रलाप इत्युक्तवत्यसि ।

60 रावणः ।

यत्संतुष्टवतः पुरा पुरभिदश्छेदोत्सवच्छेदिनो
न क्रोधादनमन्नवोद्गताशिरःश्रेणौ नमन्त्यामपि ।

---

57 अपि नाम पुनरपि रामचन्द्रमुखचन्द्रं विलोकयिष्यामि ।

---

°वधूटी. A. B. रामभद्रैक° & च for स. A. एष for एति. B. अधिराजः.

56. C. D. °क्षालित°. A. C. E. त्यक्त for स्तेय. A. अभि & E. उपरोध for अपराध. A. om. एतत्... याचते, & विसृत for शिखर.

57. C. E. रामचन्दस्स.

58. All except A. B. om. सखि. C. E. om. जानकि. D. प्रलपति.

59. F. त्रिजटे. All except C. E. om. यत्. F. साधु for प्रलापः.

60. G. छन्द for छेद. F. D. ते for तत्.

एतत्ते दशमं शिरो मम नमत्त्वत्पादपाथोजयो-
र्व्याजं मिथिलेन्द्रपुत्रि भवतीं प्रेमातुरं याचते ॥ २५ ॥

61 सीता । संस्कृतमाश्रित्य ।

निजे पाणौ कृत्वा बकुलशतिकाबालमुकुलं
ययोश्चक्रे गुञ्जन्मधुपमवतंसं रघुपतिः ।
अपीमौ कर्णौ मे वचनमिदमाकर्ण्य न कथं
विशीर्णौ युक्तं वा चरितमिदमन्तःकुटिलयोः ॥ २६ ॥

62 रावणः । अयि जानकि अवलोकनमात्रेणापि तावन्मां संभावय ।

63 सीता । अये निशाचर न तावत्प्रार्थनाभङ्गलाघवात्कथं राघवादपि न बिभेषि ।

64 रावणः । अयि क एष राघवो नाम यं किल राम इति जनो जल्पति । विहस्य ।

कामः कियानसिलतानिहितैकबाहु-
क्रीडार्दितात्रिभुवनस्य दशाननस्य ।
रामस्तु केवलमयं सुमुखि त्वदर्थे
मां हन्ति हन्तु न चिरान्निशितैः शरौघैः ॥ २७ ॥

---

61. B. विदीर्णौ for विशीर्णौ.

63. All except A. G. have संस्कृतमाश्रित्य. G. अपि for अये. A. B. D. G. om. न. B. G. एतावत् for तावत्. A. om. कथम्. F. D. न राघवादपि.

64. D. om. अयि. G. अये. F. राघवनामा. D. om. नाम. A. F. अयम् for यम्. B. G. जनो राम इति &c. D. adds अयम् after जनः. C. E. put रावण after & D. before विहस्य. B. रामः for कामः. A. हसित & C. D. E. F. पिहित for निहित. D. °बाहुः. A. अर्जित for अर्दित. A. B. G. हन्त for हन्तु. C. E चिरम् for चिरात्. B. असितैः for निशितैः.

65 सीता । सत्यमेवैतत् ।

66 रावणः । स्वगतम् । कथमन्यदेव किमप्युक्तवानस्मि । प्रकाशम् । तदेव विपरीतं पठित्वा । अयि जानकि तावन्मां जीवय नयनामृतेन ।

67 सीता ।

तदा त्वामपि लङ्केश विलोकयति जानकी ।

68 रावणः । सप्रत्याशम् । तत्कथय समयम् । अयं हि

मन्दोदरीमपि विमुञ्चति राज्यमेत-
दप्युन्मर्दं तव पदाब्जतले करोति ।
किं जल्पितेन बहुना सुमुखि त्वदर्थे
स्वानि च्छिनत्त्यपि शिरांसि पुनर्दशास्यः ॥ २८ ॥

69 सीता ।

यदि खद्योतभासापि समुन्मीलति पद्मिनी ॥ २९ ॥

70 रावणः । सक्रोधम् । आः पापे यावत्किल तपनखद्योतयोस्तावदन्तरं रामरावणयोः । तदियं हन्यसे । इति खड्गमुत्पाटयति

71 रामः । सकरुणम् ।

हा जानकि त्वमधुनासि कथं भवित्री

सविचिकित्सम् ।

---

65. C. E. add इममेव श्लोकं पठित्वा before सत्यम्. D. सच्चमेणम्.

66. D. एवम् for एव. G. om. प्रकाशम्. B. C. E. पठति. A. B. जीवय मां तावत्. G. संजीवय.

67. D. संस्कृतमाश्रित्य for सीता. A. B. लङ्केश्वर. B. F. G. विलोकयिष्यति. A. B. जानकीं विलोकय (A. यिष्य) ति.

68. A. B. G. उच्छिनत्ति.

69. D. संस्कृतमाश्रित्य after सीता. A. G. अपि for यदि.

70. B. प्रद्योतन for तपन. F. om. एव. D तावत् & G. यत् for तत्. C. D. E. इह & B. इदम् for इयम्. A. न सहसे & D. मन्यसे for हन्यसे.

71. D. G. om. सकरुणम्. D. सीर्वोऽपि कः for धिग्दैवतम्. F. दैवकः.

धिग् दैवतं तव सुदारुण एष पाकः।

सक्रोधम्।

आः पाप राक्षसकुलाधम संहतोऽसि

ससंभ्रमम्।

हे वत्स लक्ष्मण धनुर्धनुरेप कालः॥ ३० ॥

72 लक्ष्मणः। आर्य किमिदमैन्द्रजालिकविलोकनादलीकमेव संभ्रम्यते।

73 रावणः। अयि जानकि अयमसावुदीर्णकरवालः कालभुजङ्गः। तदिदानीमपि दशकण्ठभुजाश्लेषभेषजमनुजानीहि।

74 सीता।

विरम विरम रक्षः किं मुधा जल्पितेन
स्पृशति न हि मदीयं कण्ठसीमानमन्यः।
रघुपतिभुजदण्डादुत्पलश्यामकान्ते-
र्दशमुख भवदीयान्निष्कृपाद्वा कृपाणात्॥ ३१ ॥

75 रावणः। किमतः परं कालक्षेपेण। तदहमिदानीमस्याः कण्ठरुधिरेण कालिकामर्चयामि। इति खड्गधारां परामृशति।

---

E. हम् (?) for सम्. A. B. D. G. हृतः for हतः. F. धनुधनुरेष (?)

72. D. F. om. आर्य. A. om. किम्. C. E. महेन्द्र° D. F. G. °जालिक. A. संभ्रम्यसे.

73. D. F. om. अयि & जानकि & have करोदीर्ण°. G. adds कराल before करवालः. B. D. G. om. काल. D. भुजङ्गमः. B. C. E. दशमुख. A. B. G. °आश्लेषभेषजम्. F. आश्लेषसुखम्.

74. C. D. E. संस्कृतमाश्रित्य. A. वृथा. F. अल्पः for अन्यः. B. उज्वल for उत्पल.

75. B. C. E. इहमिदानीम् (?) C. E. एतस्याः. A. अर्चयिष्यामि.

76 रामः । अहह

विधिरकरुणः स्फीतं स्फीतं तपः परिजृम्भते
जलधिसलिले मग्नं विश्वं युगं परिवर्तते ।
कुवलयदलस्रक्संश्लेषोत्सवैकपदे पदं
यदयमदयः सीताकण्ठे करोति कृपाणकः ॥ ३३ ॥

पुनर्विभाव्य ।

चान्द्रीं लेखां दशति दशनैर्दारुणः सैंहिकेयो
नव्यां वल्लीं दवदहनकश्चन्दनीं दन्दहीति ।
अप्युन्मत्तः कुवलयमयीं मालिकामालुनीते
मूलादुन्मूलयति नलिनीं दुष्टहस्ती करेण ॥ ३४ ॥

77 सीता ।

चन्द्रहास हर मे परितापं
रामचन्द्रविरहानलजातम् ।
त्वं हि कान्तिजितमौक्तिकचूर्णं
धारया वहसि शीतलमम्भः ॥ ३५ ॥

78 रावणः । कः कोऽत्र भोः । सत्वरं मे करतले कपालपात्रमर्प्यतां येनास्याः कण्ठरुधिरं प्रतीच्छामि । इत्यशोकविटपान्तराले हस्तं प्रसार्य । कथं न्यस्तमेव केनापि मम करतले कपालम् । विलोक्य सचमत्कारम् । अये न कपालमेतत् । किं त्वशस्त्रच्छिन्नं

---

76. G. om. युगम्. A. मय for दल. C. E. परम् for पदम्. G. तत् for यत्. D. विमृश्य for विभाव्य. A. संलुनीते.

77. F. अन्तः for अम्भः

78. D. F. G. मम. B. C. F. G. करे. G. अर्पताम् (?). F. एतत् for येन. A. कथमपि. A. B. G. om. केनापि. F. मत् for मम. D. om. कर. D. F. om. अये. B. adds इदानीमेव after किंतु & कथम् be-

शिर एव कस्यापि । विमृश्य । कस्य पुनरिदम् । नूनमक्षकुमारस्य । इति मूर्छितः पतति ।

79 त्रिजटा । अयि लङ्केश्वर समाश्वासिहि समाश्वासिहि ।

80 रावणः । समाश्वस्य । नूनमिदं तस्यैव दुष्टकपेर्विजृम्भितम् । तेन तमेव तावदग्रतः पातयामि । इति निष्क्रान्तः ।

81 रामलक्ष्मणौ । अहो संविधानवैदग्धी ।

82 त्रिजटा । सीतामालिङ्ग्य । सखि पुण्येन जीवितासि ।

83 सीता । अपुण्णेणेति भणिदव्वम् ।

84 त्रिजटा । कथमिव ।

85 सीता । कहं उण तं अपुण्णं ण होइ । जं किर रामचन्दविरहतावणिव्वापणीए चन्दहासधाराए उवेक्खिदह्मि । ता किं इमिणा जीविदेण । इह दारुसञ्चअम्मि अग्गिं पज्जालेहि जत्थ इमाइं अङ्गाइं सीदलम्मि ।

---

83 अपुण्येनेति भणितव्यम् ।

85 कथं पुनस्तदपुण्यं न भवति । यत्किल रामचन्द्रविरहतापनिर्वापणया चन्द्रहासधारयोपेक्षितास्मि । तत्किमनेन जीवितेन । इह दारुसंचयेऽग्निं प्रज्वालय यत्रेमान्यङ्गानि शीतलयामि ।

---

fore नूनम्. A. कथम् for नूनम्. F. मत् for अक्ष F. D. मूर्छति.

79. D. लङ्केश. B. om. one समाश्वासिहि.

80. F. D. अस्य for तस्य. D. F. G. om. एव. D. F. om. दुष्ट. D. तदेनम् for तेन तम्. F. तेन मे तावत् A. B. अग्रे. F. adds तम् after अग्रतः. A. घातयामि.

81. C. E. °वैदग्ध्यम्.

82. D. om. सीताम्. C. D. E. समालिङ्ग्य. B. निर्वर्ण्य for सीतामालिङ्ग्य. A. B. C. जीवसि.

83. A. D. भणिज्जम्. B. भणिज्जइ. G भणिज्ज.

85. D. F. om. तम्. D. om. जीविदेण & has चारु for दारु. B. °सञ्चएण. C. F. सीदलइस्सम्.

86 त्रिजटा । शान्तं पापम् । नन्वचिरादेव निजाङ्कानाम्

हिमकरकिरणकरम्बितमरकतमयपीनपट्टकप्रतिमे ।
मलयजपरागसरसे रामोरसि तापमपहरसि ॥ ३६ ॥

87 सीता । हला किं इमिणा अलीअजप्पिदेण । सच्चं जेव्व अणलपवेसम्मि ववसिदम्हि । ता उवणेहि मे अङ्गालखण्डअम् ।

88 रामः । हन्त भोः कथमपि शार्दूलमुखान्मुक्तायाः पुनरपि शबरवागुरामवतीर्णायाः कुरङ्गवध्वा भङ्गीमङ्गीकृतवती जानकी ।

89 त्रिजटा । निर्गत्य प्रविश्य च । सखि असुलभानलोऽयं प्रदेशः ।

90 रामः । सहर्षम् । त्रिजटे दिष्ट्या रक्षितस्त्वया रामः ।

91 सीता । संस्कृतमाश्रित्याशोकवृक्षं प्रति ।

कुरु सकरुणं चेतः श्रीमन्नशोकवनस्पते
दहनकणिकामेकां तावन्मम प्रकटीकुरु ।

---

87 हला किमेनेनालीकजल्पितेन । सत्यमेवानलप्रवेशे व्यवसितास्मि । तदुपनय मेऽङ्गारखण्डकम् ।

91 हला प्रेक्षस्व प्रेक्षस्व । निपतितं तावदस्य शिखरादङ्गारखण्डकम् ।

---

86. A. F. repeat शान्तं पापम्. A. om. मय. D. °प्रकटे for प्रतिमे. D. सरसि & G. रजसि for सरसे.

87. G. सव्वम् for सच्चम्. A. B. G. °पवेसे. A. B वसिदह्मि & C. E. विवसदह्मि. C. उवर्णेह ( ? ) C. E. अणल°.

88. C. D. E. F. om. शबर. B. अङ्गनायाम् for वध्वाः.

89. D. F. G. om, सखि. B. अयि for सखि. B. G. सुलभा°.

90 A. om. सहर्षम्. A. has त्वया रक्षितो रामः. D. ते for त्वया.

91. A. अशोकं प्रति & B. अशोकवृक्षं प्रति before संस्कृतम् &c. D. अशोकं प्रति. D. F. G. अलमकरुणम्. B. नमोऽस्तु ते for वनस्पते. A. मम for नव. C. E. F. °व्याज्ञाम्. B. C.

ननु विरहिणां संतापाय स्फुटीकुरुते भवान्
नवकिसलयश्रेणिव्याजात्कृशानुशिखावलिम् ॥ ३७ ॥

विलोक्य सहर्षम् । हला पेक्ख पेक्ख निवडिदं दाव अस्स सिहरादो अङ्गालखण्डअम् । इत्युपसृत्य ग्रहीतुमिच्छति ।

92 रामः ।

अये कथमशोकोऽपि ममायं शोकतां गतः ।

93 लक्ष्मणः । आर्य अनुपपन्नमिदं यत्किल तरुशिखरमङ्गारकमुद्गिरतीति ।

94 रामः ।

किं नोपपादयेद्वत्स रामस्य विधिवैधुरी ॥ ३८ ॥

95 सीता । अङ्गारखण्डं हस्तेनादत्ते ।

96 रामः ।

अनल नलिनकोमले करेऽस्याः
स्फुरदरुणोत्पलकुड्मलोपमः स्याः ।

विमृश्य ।

चरितमुचितमस्ति वा कुतस्ते
ननु भुवने विदितोऽसि कृष्णवर्त्मा ॥ ३९ ॥

---

D. E. om. one पेक्ख. A. G. इमस्स for अस्स. C. E. °खण्डम्.

92. B. C E. om. अयम्. B. शोकत्वम् & D. शोकरताम्. F. शोकरः सङ्गतः.

93. A. B. G. अङ्गारखण्डकम्. A. °खण्डम्. B. G. om. इति.

94. D. अये before किम्. B. G. न संपादयेत्. D. om. स्य in रामस्य.

96. A. कुड्मलोपमा. All except D. G. om. विमृश्य.

97 सीता। हस्ते गृहीत्वा सविषादम्। कहं मह अपुण्णेण अग्गीवि सीअलो संवुत्तो। निपुणं निरूप्य सचमत्कारम्। अये अङ्गालखण्डअं ण हु एदं। अवि उण पम्मराअरअणखण्डअम्।

98 त्रिजटा। अये पुण्यवतामाग्निरेव रत्नं भवतीति प्रवादः सत्य एव संवृत्तः।

99 सीता। पुनर्विलोक्य। कहं सा इमा रअणमुद्दिआ।

पुनः संस्कृतमाश्रित्य।

या शैशवावधि मनोरमरामचन्द्र-
हस्ताङ्गुलिप्रणयिनी सुभगा सुवृत्ता।
अन्येव सा जनकराजसुता कथं नु
लङ्कामुपागतवती मणिमुद्रिकेयम्॥ ४०॥

पुनः सादरं कराङ्गुलिकिसलयेन लालयन्ती। अये रअणङ्गुलीअ अवि दाव कुसलं सलक्कणाणं रामचन्दचलणाणम्।

---

97 कथं ममापुण्येनाग्निरपि शीतलः संवृत्तः। अये अङ्गारखण्डकं न खल्वेतत्। अपि पुनः पद्मरागरत्नखण्डम्।

99 कथं सेयं रत्नमुद्रिका। अये रत्नाङ्गुलीय अपि तावत्कुशलं सलक्ष्मणयो रामचन्द्रचरणयोः।

---

97. A. B. om. हस्ते गृहीत्वा. A. B. C. E. om. सविषादम्. C. E. put कहं before अग्गी. A. पुण्णेण. C. D. अङ्गालखण्डअ. A. B. C. E. इमं for एदं. C. E. om. रअण.

98. A. om. this speech. B. अयि सखि for अये.

99. A. om. पुनर्विलोक्य. A. B. एसा for सा इमा. D. F. G. have मुद्रिकां प्रति after आश्रित्य. A. शैशवादतिमनोहर &c. B. सुलभा for सुभगा. A. च वृत्ता for सुवृत्ता. C. E. तु for नु. A. मुद्दिके स्वम्. C. D. E अङ्गुलीअअ. B. om. दाव. B. रामदेव.

100 पटाक्षेपेण प्रविश्य हनूमान्। कुशलं देवि कुशलम्।

101 सीता। अमिअमुह कोऽसि तुमम्।

102 हनू०।

तारापतेरनुचरो रघुनन्दनस्य
दूतः सुतोऽस्मि मरुतः प्रथितो हनूमान्।
त्वां हन्तुमुद्यतवतो दशकन्धरस्य
न्यस्तं करे निभृतमक्षशिरो मयैव ॥ ४१ ॥

103 रामः। अहो कथमिदं हनूमन्नामधेयस्य मद्भागधेयस्य विलसितमेतत्।

104 लक्ष्मणः। अहो सचमत्कारता संविधानस्य।

105 सीता। अयि भद्दमुह को उण इमो तारावई।

106 हनू०।

यो वालिनः शौर्यनिधेरमित्र-
स्त्रैलोक्यबन्धोस्तपनस्य सूनुः।
रामस्य पादाब्जतलाभिवर्ती
सुग्रीवनामा कपिचक्रवर्ती ॥ ४२ ॥

---

101 अमृतमुख कोऽसि त्वम्।

105 अयि भद्रमुख कः पुनरयं तारापतिः।

---

100. C. E. प्रविश्य पटाक्षेपेण.

101. A. इमास्सिं before अमिह°. F. अयि भद्दमुह.

102. A. दूतोऽस्मि मारुतसुतः.

103. A. om. अहो. D. F. हनूमान्. A. नामधेयं ... भागधेयम्. बान्धवस्य for भागधेयस्य. A. विलसति. B. C. E. om. एतत्.

104. B. C. E. सस्मितम् before अहो.

105. A. B एसो for इमो.

106 G. अमित्रम्. A. B. F. पुत्रः for सूनुः. A. अग्रवर्ती & B. C. E. अनुवर्ती.

107 सीता । केण उण नरवाणराणं एरिसं सक्खित्तणं णिम्मिदम् ।

108 हनू० । रामबाणेनैव

वालिने विसृजता धनुरङ्कं
नाकलोकललनाकुचकेलिः ।
तारया सममदीयत चास्मै
वानरेन्द्रपदवीमणिमौलिः ॥ ४३ ॥

109 सीता । कहेहि दाव । अवि णाम मह मन्दभाइणीए किदे दुव्व-
लो दाणिं किंपि रहुणाहो ।

110 हनू० । किमपीति किमुच्यते । इदानीं हि

बहुलपक्षशशीव दिने दिने
रघुपतिः कृशतामुपयाति सः ।

111 सीता । हद्धि हद्धि ।

112 हनू० ।

कुवलयप्रतिमा द्युतिरस्य तु
प्रविकसत्यनुभाववशंवदा ॥ ४४ ॥

---

107 केन पुनर्नरवानराणामीदृशं सखित्वं निर्मितम् ।

109 कथय तावत् । अपि नाम मम मन्दभागिन्याः कृते दुर्बल इदानीं किमपि रघुनाथः ।

111 हा धिक् हा धिक् ।

---

108. A. चापेन for बाणेन B. C. E तेन हि before वालिने. B. कुच-केल्या.

109. A कहं & B. कहेसु for कहेहि. A. B. मन्दभाइणीए मह. D. F. किंपि दाणिम्. A. किं ति.

110. A. has देवि त्वद्विरहेण परितप्यते रामः for किमपीति...हनूमान् (112). D. F. अयि देवि before किमपि. B. दिने दिनेऽप्यहरहः:.

111. C. E. have one हद्धि only.

112. A. कुवलयद्युतिमद्युति &c. B. G. °प्रतिमद्युति.

113 सीता । दाणिं किपि उज्जीविदह्मि ।

114 हनू० । अयि देवि आकर्णय तावद्यत्संदिष्टं देवेन देव्याः ।

हिमांशुश्चण्डांशुर्नवजलधरो दावदहनः
सरिद्वीचीवातः कुपितफणिनिश्वासपवनः ।
नवा मल्ली भल्ली कुवलयवनं कुन्तगहनं
मम त्वद्विश्लेषात्सुमुखि विपरीतं जगदिदम् ॥ ४५ ॥

अपि च ।

कस्याख्याय व्यतिकरमिमं मुक्तदुःखो भवेयं
को जानीते निभृतमुभयोरावयोः स्नेहसारम् ।
जानात्येकं शशधरमुखि प्रेमतत्त्वं मनो मे
त्वामेवैतच्चिरमनुगतं तत्प्रिये किं करोमि ॥ ४६ ॥

115 सीता । लज्जते ।

116 त्रिजटा । सखि त्वमपि रघुपतेः किमपि प्रतिसंदेशं प्रत्यभिज्ञानं च समर्पय ।

---

113 इदानीं किमप्युज्जीवितास्मि ।

---

113. D. पि after दाणिम्.

114. B यथा for यत्. D. F. तु after यत्. B. C. D. E. F. आदिष्टम् for संदिष्टम्. Between देव्याः & हिमांशुः &c. F. has सीता। कहेहि दाव । हनूमान्. C. E. भवति जलदः for नवजलधरः & फूत्कार for निश्वास. A. B. अपि for इदम्. D. om. अपि च & अहम् for इनम् ; B. इदम् for the same. C. E. अनयोः for उभयोः. C. E. F. वल्लभे for आवयोः. C. E. प्रेम for स्नेह.

116. A. किमपि रघुपतेः.

117 सीता । इमो मे पडिसंदेसो ।

बहलगलन्तणअणजलणिब्भरपज्जाउलावि मह दिट्ठी ।
तुह सुहअ वअणससहरलावण्णरसं पिपासेदि ॥ ४७ ॥

चूडारत्नमाकृष्य हनूमतः करे समर्पयन्ती । अयि चूडारअण

पच्छालअ णिअमङ्गं रअणीअरदिट्ठिपंसुपंसुलिअम् ।
रहुवइपअणिम्मलणहरअणीअरजोह्णिअरम्मि ॥ ४८ ॥

118 हनू० । देवि अनुजानीहि । त्वरयति मां रामचन्द्रचरणदर्शनोत्कण्ठा ।

119 सीता । सबाष्पगद्गदम् । अयि अकारणसिणिद्ध पडिगते तुम्मि पुणोवि को मह कहिस्सदि रहुणाहस्स पउत्तिम् ।

120 हनू० । अयि देवि दिष्ट्या स्मारितोऽस्मि । नन्विदं ते संदिष्टं देवेन देव्याः ।

---

117 अयं मे प्रतिसंदेशः ।

बहलगलन्नयनजलनिर्भरपर्याकुलापि मम दृष्टिः ।
तव सुभग वदनशशधरलावण्यरसं पिपासति ॥

अयि चूडारत्न

प्रक्षालय निजमङ्गं रजनीचरदृष्टिपांसुपांसुलित ।
घुपतिपदनिर्मलनखरजनीकरज्योत्स्नानिकरे ॥

119 अयि अकारणस्निग्ध प्रतिगते त्वयि पुनरपि को मम कथयिष्यति रघुनाथस्य प्रवृत्तिम् ।

---

117. B. G. विच्छालअ. A. पस्स for पंसु. C. D. A. G. जोह्णीर.

118. C. D. E. F. have माम् after अनुजानीहि & मे (F. हि मे) after त्वरयति. D. om. चरण.

119. B अये, & पि after तुम्मि. C. E. वि after को & have रहुणाहप्पउत्तिम्.

120. B. om. ननु & देव्याः. C. D. E. F. देवेनैव सं (D. F. आं)

मा ताम्य तामरसपत्रविशालनेत्रे
विख्याप्यते पुनरपि त्वयि मत्प्रवृत्तिः ।
सौमित्रिकार्मुकगुणध्वनिभिर्गभीरै-
स्तैः किं च राक्षसवधूरुदितैरधीरैः ॥ ४९ ॥

121 नेपथ्ये ।

हत्वा कथंचिदपि राजकुमारमक्षं
रे वानरापसद कुत्र पलायितोऽसि ।
त्वां हन्तुमिच्छति दशाननशासनेन
दर्पोद्धतो धृतधनुर्ननु मेघनादः ॥ ५० ॥

122 हनू० । देवि कृतकार्योऽस्मि । तदलमतःपरमात्मापलापेन । तदिदं प्रणम्यसे आपृच्छ्यसे च ।

123 सीता । अयि पवणणन्दण अणाआसेण इमं दुट्ठणिसाअरसाअरं अदिक्कमेहि ।

124 हनू० । अयं मूर्ध्नि गृहीतो देव्याः प्रसादः । इति निष्क्रान्तः ।

125 सीता । हला तिअडे खेअरीभविअ पेक्ख दाव इमस्स उत्तन्तम् ।

---

123 अयि पवननन्दन अनायासेनेमं दुष्टनिशाचरसागरमतिक्रमस्व ।
125 हला त्रिजटे खेचरीभूत्वा प्रेक्षस्व तावदस्य वृत्तान्तम् ।

---

दिष्टं देव्याः for ते...देव्याः. B. ताम्य. C. E. F. विज्ञाप्यते. B. मे for मत्. A. D. गभीरैः for अधीरैः.

122. C. E. om. इदम्.

123. A. G. अये. B. has अणाआसेण at the end of the sentence instead of after णन्दण. A. उग्ग for दुट्ठ. G. दुग्गिसाअर. C. E. F. णिसाअरणअरं साअरं अ.

124. D. om. मूर्ध्नि. D. अस्मि & F. आस्ति after गृहीतः.

125. D. इमं दाव after दाव.

126 त्रिजटा । तथा । इति निष्क्रान्ता ।

127 नेपथ्ये ।

बाणौघानेष वीरः कवलयति रुषा मेघनादेन मुक्तान्

128 सर्वे । हर्षं नाटयन्ति ।

129 पुनर्नेपथ्ये ।

बद्धोऽयं राक्षसेन ज्वलदनलशिखादीप्तपुच्छः कृतश्च ।

130 सर्वे । विषादं नाटयन्ति ।

131 पुनर्नेपथ्ये ।

क्रामन्नट्टालकानामुपरि कृतपदो निर्दहत्येष लङ्काम्

132 सर्वे । हर्षविषादौ नाटयन्ति ।

133 पुनर्नेपथ्ये ।

अक्रान्तोऽयं पयोधेः पयसि शमयति स्वाङ्गलग्नं कृशानुम् ॥९१॥

134 सर्वे । हर्षं नाटयन्ति ।

135 पुनर्नेपथ्ये । अहो आश्चर्यमाश्चर्यम् ।

वेलाद्रेरस्य हेलाक्रमणपरिणतस्तुङ्गमाक्रम्य शृङ्गं
मौलिं पूर्वाचलस्य द्युमणिरिव नभो लङ्घयत्यम्बुराशिम् ।

---

126. C. D. E. F. एवमस्तु for तथा. C. E. पश्यति for निष्क्रान्ता.

127. B. G. एकवीरः. B. C. E. G. कलयति च.

129. B. G. om. पुनः.

130. D. हर्षविषादौ.

131. D. om. पुनर्नेपथ्ये. F. om. पुनः. F. क्रान्त्वा च. A. B. D. अट्टालकान्तानुरुशिखरभुवः. C. E. F. दाहयामास & G. दन्दहीति. D. एव for एष.

133. F. om. पुनः. A. D. F. आक्रान्तः & C. E. आः क्लिन्नः for आक्रान्तः. A. पयोधिः. C. E. F. स्वाङ्गशीतम्.

134. D. omits this.

135. D. om. पुनर्नेपथ्ये. C. E. अत्यद्भुतं वर्तते & D. F. अद्भुतम् for

वेगप्रोद्भूतवातप्रतिहतसलिलोन्मुक्तगम्भीरगर्भ-
व्यक्तीभूतोरगेन्द्रस्तुतिशतविकसत्कीर्तिहारो हनूमान् ॥ ९२ ॥

136 सीता । नेपथ्याभिमुखमवलोक्य । हला तिअडे अवतिण्णासि महीअलं । ता पिअंवदाए तुह आलिङ्गेमि अङ्गाइं । इति निष्क्रान्ता ।

137 रामः । प्रिये मामपि प्रतीक्षस्व ।

138 लक्ष्मणः । आर्य किमिति लङ्कावृत्तान्तानुकारिणि विद्याधरप्रणीते महेन्द्रजाले पुनःपुनरपि संभ्रम्यते ।

139 रामः । तर्हि दिष्टयास्माभिर्निजविक्रमकथनपराङ्मुखस्यापि हनूमतश्चरितरहस्यमाकलितम् ।

140 नेपथ्ये । अये रघुनाथ अयमसौ

दर्पोद्धतं दधिमुखं तरसा निपीड्य
पीत्वा चिरं मधुवने सरसं मधूनि

---

136 हला त्रिजटे अवतीर्णासि महीतलम् । तत्प्रियंवदायास्तवालिङ्गाम्यङ्गानि ।

---

आश्चर्यमाश्चर्यम्. C. परिणमन्. B. पात for वात. A. °गर्भैः.

136. D. अवतिण्णामि; & has पिअंवदा आलिङ्गेमि &c. C. G. निष्क्रान्ताः.

137. A. D. ममापि.

138. B. om. आर्य. All except B. have किमिदम्. D. वृत्त for वृत्तान्त. A. G. अनुसारिणि. A. C.E. °प्रणीतमहेन्द्र°. A. G. om. पुनरपि. C. E. विभ्राम्यते. D. भ्राम्यते. B. F. भ्रम्यते.

139. B. G. कथा for कथन. B. om. अपि. C. D. E. F. चरितमाकलितरहस्यम्.

140. C. D. E. F. अयि. A.

द्रष्टुं समेति भवतः पदपद्मलीलां
नीलाङ्गदप्रभृतिभिः सहितो हनूमान् ॥ १२ ॥

141 रामः । वत्स आकर्णितम् । तदागच्छ कृतकार्यं हनूमन्तं प्रत्युद्गच्छावः ।

इति निष्क्रान्ताः सर्वे ।

इति षष्ठोऽङ्कः ।

---

कोपोद्धतः & चरम् for चिरम्. A. D. तरसा & B. G. स्वरसम् for सरसम्.

141. B. अये instead of & C. D. E. F. अपि after वत्स. D. कृतवीर्यम्. A. प्रत्यागच्छावः.

## ॥ सप्तोऽङ्कः ॥

1 ततः प्रविशति पुलस्त्यशिष्यः । परितो विलोक्य । अपरिशीलितसंनिवेशोऽस्मि । तत्कथं पृच्छामि तस्य भवनम् । पुनर्विलोक्य । कथमयं लङ्केश्वरमातामहस्य महामन्त्रिणो माल्यवतः परिचारकः करालकः । उच्चैः । सखे करालक इत इतः ।

2 प्रविश्य करालकः । मुने प्रणम्यते ।

3 मुनिः । समीहितं लभस्व । कथय तावन्मे बिभीषणस्य भवनम् ।

4 करा० । किं तत्र ।

5 मुनिः । आदिष्टोऽस्मि भगवता पुलस्त्येन कमपि संदेशमुपनेतुं कनिष्ठपौलस्त्यस्य ।

6 करा० । न तावदिदानीमिह बिभीषणः ।

7 मुनिः । कथय किमेतत् ।

8 करा० । एकदाभिप्रणमतो बिभीषणस्य करात्सकौतुकं लिखिताक्षरपङ्क्तिपत्रमेकं गृहीतं लङ्केश्वरेण वाचितं च ।

---

1. D. पुरः for परितः. C. D. E. अवलोक्य. D. कम् for कथम्. A. om. तस्य & has भवनम्. A. B. G. have लङ्केश्वरमहामन्त्रिणः. D. om. महा. C. E. om. करालकः. A. om. सखे. D. om. करालक. F. अये for सखे करालक. B. has one इतः.

2. A. om. प्रविश्य.

4. C. E. F. ततः & D. तत्.

5. C. E put कनिष्ठपौलस्त्यस्य before कमपि. A. D. किम् & F. कथम for कम्. A. अनुनेतुम्. A. B. कनिष्ठपौत्रस्य & G. पौत्रस्य only.

6. A. om. इदानीम्.

8. D. F. कदापि हि for एकदाभि°. A. फल & B. G. भूति for शुद्धि. A. न परि° & C. D. E. F. खलु न. A. reads चतुर्थी...पट्टिका as the first

उदर्कशुद्धिमिच्छद्भिः सद्भिर्न खलु दृश्यते ।
चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका ॥ १ ॥

9 मुनिः । अहो प्रभुविज्ञप्तिचातुरी बिभीषणस्य । ततस्ततः ।

10 करा० । ततो विहस्य लङ्केश्वरेणोक्तम् । नूनं केनापि भीरुणा भाषितमेतत् । ख्यातं हि यत्किल

परस्त्रीकुचकुम्भेषु कुम्भेषु परदन्तिनाम् ।
निपतन्ति न भीरूणां दृष्टयः शरवृष्टयः॥ २ ॥

11 मुनिः । अहो निजचित्तवृत्तिभित्तिभूमिकानुसारीणि वाक्चित्राणि लोकस्य ।

12 करा० । ततः सप्रणयकोपविषादमिदमाह लङ्केश्वरं बिभीषणः ।

यस्य त्र्यम्बकमौलिखेलदमलस्वर्लोककल्लोलिनी-
लीलालङ्घनलम्पटेन यशसा दिग्भित्तयः क्षालिताः ।
सोऽपि त्वं जनकाधिराजतनयाबद्धाभिलाषः कथं
हा जातोऽसि पुलस्त्यसंततियशःशीतद्युतेर्लाञ्छनम् ॥ ३ ॥

13 मुनिः । सकौतुकम् । ततस्ततः ।

---

line & उदर्क...दृश्यते as the second.

9. A. प्रभो. B. F have one ततः & G. has none.

10. C. D. E. ततश्च. A. एवम् & B. G. एकम् after विहस्य. B. om. हि.

11. All except B. G. om. this speech & करालकः of 12, thus making ततः &c., as a continuation of 10. B. वा कविस्थानि लोकस्थ.

12. A. G. om. स before प्रणय. C. E. °कोपं सविषादम्. A. F. om. इदम्. D. कोपमाह &c.. C. E. वृद्ध for बद्ध.

13. A. one ततः. F. om. ततस्ततः.

14 करा० । ततः ।

कोपपाटलितलोलदृष्टिना
किंचिदुन्नमितखड्गयष्टिना ।
रावणेन नयधर्मभूषण-
स्ताडितो हृदि पदा बिभीषणः ॥ ४ ॥

15 मुनिः । हन्त नूनम्

लङ्केश्वरेण दुष्टेन नयधर्मविभूषणः ।
बिभीषणः स न परं विभवोऽपि पद्मा हतः ॥ ५ ॥

ततस्ततः ।

16 करा० । ततः कतिपयपरिवारेण बिभीषणेन लङ्केश्वरं विहाय राम एव समाश्रितः ।

17 मुनिः । स्वगतम् । अनुष्ठितं तर्हि पुलस्त्यसंदेशरहस्यं बिभीषणेन । प्रकाशम् । भवान्पुनः किमधुना कर्तुकामः ।

18 करा० । अहमादिष्टोऽस्मि माल्यवता । जानकीविरहविह्वलहृदयस्य लङ्केश्वरस्य मनोविनोदनाय केनापि चित्रकारेण विरचितं चित्रपटमिदम् । तद्गोचरीकरणीयमिति ।

---

14. D. om. ततः., B. D. F. G. ततश्च. A. खड्गमुष्टिना. C. E. F. मार्ग for धर्म.

15. C. D. E. रुष्टेन. A. बिभीषणः for विभूषणः. A. B. G. च for स. B. C. D. E. repeat मुनि before ततस्ततः. A. B. om. one ततः.

16. B. ततश्च. D. कतिपयसहायेन. D. G. om. बिभीषणेन. A. नूनम् before रामः. C. E. राममेवानुगतम् for राम...श्रितः.

17. A. B. om. पुनः.

18. D. उज्वलद् & F. विज्वल for विह्वल. A. °विह्वलस्य. D. om. लङ्केश्वरस्य. C. G. चित्रकरेण. A. चित्रितम् & B. रचितम्. B. चित्रपट्टकम्, C. चित्रपट्टम् & G. चित्रम्. D. om. चित्रपटमिदम्. G. इग् for तत्.

19 मुनिः । विमृश्य । कथमित्थमासन्नशत्रौ लङ्केश्वरे तादृशस्य महामन्त्रिणो माल्यवत एवमुपचरितुमुचितम् । तन्नूनं प्रस्तुतोचितमेव किमप्येतद्भविष्यति ।

20 नेपथ्ये ।

रे रे चन्दनमिन्दुमण्डलशिलापट्टे समुद्घृष्यतां
रे रे चामरमुज्ज्वलैः शशिकरैः श्वेतं विनिर्मीयताम् ।
रे रे बालमृणालतन्तुलतिकासूत्रेण पाथोजिनी-
पत्रस्थैरुदबिन्दुभिर्मणिमयो हारः समासूत्र्यताम् ॥ ६ ॥

21 मुनिः । सोपहासमात्मगतम् । यादृशोऽयं शीतोपचारस्तादृश एव सीतोपचारोऽपि लङ्केश्वरस्य भविष्यति । प्रकाशम् । कथमिदं विरहतप्तस्य दशकन्धरस्य शीतोपचारार्थमादिश्यन्ते निशाचराः ।

22 करा० । खेचराश्च । इदानीं हि

अङ्गं लिम्पति चन्दनेन मृदुभिः शीतद्युतिः स्वैः करैः
किंचिच्चञ्चलतालवृन्तकलनव्यग्रो वसन्तानिलः ।
किंचायं नलिनीदलैर्वितनुते तल्पं प्रतीचीपति-
र्देवैरित्थमनङ्गतप्तहृदयो लङ्केश्वरः सेव्यते ॥ ७ ॥

23 मुनिः । स्वगतम् । अहो अलीकवाग्डम्बरं निशाचरस्य ।

---

19. G. विहस्य. A. आपन्नशत्रौ. G. लङ्केश्वरेण. D. om. महा.
20. D. शिलापत्रे. A. जलबिन्दुभिः.
21. A. B. स्वगतम्. D. E. सीतापचारः. B. C. E. G. om. अपि. B. om. लङ्केश्वरस्य. G. इति after भविष्यति. A. B. लङ्केश्वरस्य विरहतप्तस्य.
22. D. F. चालित for चञ्चल. E. वलनव्यग्रः.
23. D. om. स्वगतम्. All except F. have अये for अहो.

24 करा० । नेपथ्याभिमुखमवलोक्य । अये कथमयं प्रहस्तो राजद्वारमुपसर्पति । तदस्य हस्ते चित्रपटं समर्पयामि । भवानपि समीहितं साधयतु ।

इति निष्क्रान्तौ ।

विष्कम्भकः

ततः प्रविशति रावणश्चित्रपटहस्तः प्रहस्तश्च ।

25 रावणः । स्वगतम् ।

राजल्ललाटफलका कमनीयकूज-
त्काञ्चीगुणप्रणयिनी धृतकेशपक्षा ।
हा किं करोमि मम सा हृदयं प्रविष्टा
नाराचयष्टिरिव पुष्पशिलीमुखस्य ॥ ८ ॥

विमृश्य । अहो कथमद्यापि हठाहरणखिन्नां नितान्तकृशधूसराङ्गीमपि जानकीं जनस्थानस्थितामिवाहमखण्डमण्डनां पश्यामि । अथ वा उचितमिदम् ।

आचान्तकान्तिरुन्निद्रैर्मयूखैरहिमत्विषः ।
धूसरापि कला चान्द्री किं न बध्नाति लोचनम् ॥ ९ ॥

26 प्रहस्तः । अयि देव इदमालोक्यतां चित्तविनोदनं चित्रम् ।

---

24. All except A. B. om. अये. B. अद्य for अयम्. A. E. तस्य for तदस्य. A. F. अर्पयामि & B. G. अर्पयिष्ये. All except A. B. have चित्रहस्तः.

25. D कमनीयराजत् B. हृदयं मम सा. D. नाराचसृष्टि. C. E. अहम् after कथम्. C. D. E. F. हरधनुर्हरण (C. E. °स्थाम्, D. °स्थानम् & F. स्थानस्थाम्) for our हठाहरणखिन्नाम्. D. om. कृश. C. D. E. F. om. अहम्. A. B. अखण्डित. A. B. D. उन्मुद्रैः for उन्निद्रैः.

26. B. चित्रपट प्रसार्य. A. B. अये. C. E. विलोकयतामिदम्. D. °विनोदचित्रम् & F. विनोदं चित्रम्.

27 रावणः । किं पुनरिहालिखितम् ।

28 प्रहस्तः । अयं तावत्तरलतिमिमकरकरालकल्लोलकोलाहलोज्जागरः सागरः ।

29 रावणः । विलोक्य । किमिदमुत्तरेण तरङ्गमालिनमनुतमालखण्डमाखण्डलधनुःसहस्रानुकारि कपिशयति गगनतलम् ।

30 प्रहस्तः । तदिदं सुग्रीवपालितं कपिकुलम् ।

31 रावणः । विहस्य । अयि वालिपालितमिति वक्तव्यम् । भवतु किमनेन । कौ पुनरिमौ कार्मुकधरौ ।

32 प्रहस्तः । तावेतौ रामलक्ष्मणौ ययोरग्रजस्य बाणपातविलसितेन सुग्रीवपालितमधुना कपिकुलम् ।

33 रावणः । अनाकर्णितकेन । कः पुनरयं नितान्तकृशकमनीयतनुरमन्दमन्दराघातानिर्मन्थनोत्थिततरलतरङ्गदूरविक्षिप्तशङ्कराशिरःशेखराधिरोहणकुतूहली कलानिधिरिव तरङ्गमालिनस्तटभुवमधिशेते ।

---

27. D. विलिखितम् & A. F. लिखितम्.

28. D. om. तरल. A. तिमिर & B. G. तिमिनिकर for तिमिमकर.

29. A. अनुगतम् for अनुतमालखण्डम् which D. F. om.

31. A. om. विहस्य. A. अये & C. E. G. अपि for अयि. C. D. E. F. om. भवतु. G. पुनरनेन. A. कार्मुकधारौ.

32. A. G. इमौ for एतौ. C. E. एतयोः for ययोः. A. अनयोः after ययोः.

33. A. आकृति for कृश. A. C. E. अभिघात. A. B. D. मथित & C. E. मन्थ for मन्थन. C. E. F. °उत्थित· & D. उत्थतत्पूर for उत्थित.° B. om. तरल. C. E. F. तरलतर· D. om. दूर. A. B. नि for वि in विक्षिप्त. C. D. E. F. विक्षिप्तः & शशि (D. श) धर for शङ्कर. A. तटम् only. A. B. अनुशेते. A. इव after °शेते.

34 प्रहस्तः । स एष लङ्कागमनकौतुकी निजकुलगुरुं सागरमुपचरितुं कुशशयनविन्यस्तगात्रः प्रथमो दाशरथिः ।

35 रावणः । विहस्य । कथमित्थमेव जानकीलाभकौतुकी सोऽयमस्मानप्युपचरिष्यति ।

36 प्रहस्तः । इतो विलोक्यतामयं रामनाराचनिवहनिर्मुक्तबहलानलहेलातरलदीनमीनानिकरपारिवारः पारावारः ।

37 रावणः । कौ पुनरिमौ ज्येष्ठतापसस्य सादरं वानरवीरैः पार्श्वपरिसरमानीयेते ।

38 प्रहस्तः । अयं तावत्सागर एव । अयमपि देवस्यैव । इत्यर्धोक्ते । अथ वा किमस्य बन्धुविरोधिनो नामग्रहणेन ।

39 रावणः । कथमयं बिभीषणोऽस्मद्विरोधेन राममाश्रयति । भवतु ।

निशाचरशिरोरत्नरञ्जिताङ्घ्रिसरोरुहः ।
प्रियोऽपि दशकण्ठस्य नैष दर्शनमेष्यति ॥ १० ॥

किं पुनरिदमक्षरपाङ्क्तिद्वयम् ।

---

34. A. B. D. G. एव for एष. D. F. °कुतुकी & G. °कुतूहली. A. °चरितः. A. B. °शयने.

35. All except A. B. have °कौतुकः. A. D. om. अपि.

36. C. E. F. अवलोक्यताम्. D. G. om. निवह. A. B. समुत्थ for निर्मुक्त. C. D. E. F. हेति before हेला.

37. F. om. रावणः.

38. A. om. अयं तावत्. A. B. समुद्र. A. B. C. E. om. एव. A. B. add इति विरमति after ग्रहणेन.

39. A. om. the whole verse. B. G.° शिरोरुहः. C. E. परः, D. पादः, & F. प्रायः for प्रियः. C. D. E. F. एव for एष. Between एष्यति & किं पुनः of ours, C. D. E. F. have प्रह० । सत्यमेतत् । राव० । भवतु; & G. has रावणः । सकौतुकम्.

40 प्रहस्तः। नूनमिदं समुद्रबिभीषणौ प्रति लक्ष्मणस्य वचनद्वयं भविष्यति।

41 रावणः। एकं तावद्वाचय।

42 प्रहस्तः। वाचयति।

त्रासं मुञ्च समुद्र कोपदहनो रामस्य पास्यत्ययं
बन्दीभूतसुरेन्द्रसुन्दरदृशामक्ष्णोरमुद्रं पयः।
कामं ते मकरीगणो विहरतामेतस्य लङ्केश्वर-
स्त्रीगण्डस्थलपत्रभङ्गमकरीविध्वंसिनः सायकाः॥ ११॥

43 रावणः। अन्यदपि वाचय।

44 प्रहस्तः। वाचयति।

अद्यैवास्य बिभीषणस्य शरणापन्नस्य मूर्धानते-
रानृण्याय ददात्ययं रघुपतिर्लङ्काधिपत्यश्रियम्।
एतस्यैव भुजाविह प्रतिभुवौ सुग्रीवराज्यार्पण-
त्रैलोक्यप्रथमानसत्यचरितौ सर्वे वयं साक्षिणः॥ १२॥

45 रावणः। अहो वाग्डम्बरैकसारता कनिष्ठतापसस्य। भवतु। किं पुनरिदं मध्येसमुद्रमालोक्यते।

46 प्रहस्तः। स एष कपिकुलोन्मूलितशैलशिखरनिर्मितः ककुत्स्थकुलकीर्तिप्रशस्तिबन्धः सेतुबन्धः।

---

40. D. अये & F. अयम् for इदम्. D. om. प्रति. A. om. द्वयम्.

42. D. °दृशोरक्ष्णो समुद्रम् (?).

43. D. विहस्य before अन्यद्.

44. A. G. मूर्ध्नानतेः & B. मूर्ध्न्यानते. B. G. यत्सत्यं (G. आनृण्यं) विदधाति. D. °राज्याश्रियम्. A. °सच्चरिताः.

45. D. om. एक & puts अस्य after °सारता.

46. A. B. वीरकर & C. E. वीरकुल for कुल. D. F. G. काकुत्स्थ. G. प्रसक्ति for प्रशस्ति. C. E. G. प्रबन्ध for बन्ध.

47 रावणः । अहो चित्रकारस्य चातुरी यदलीकमपि सत्यमिव दर्शितवान् ।

48 प्रहस्तः । कथमद्यापीदमलीकमिति संभावना देवस्य ।

49 नेपथ्ये । कलकलः ।

50 रावणः । किमेतत् ।

51 प्रहस्तः ।

एषामयं रामचमूचराणां
दर्पोद्धतानां कपिकुञ्जराणाम् ।
नवोद्गतानामिव नीरदानां
कोलाहलः कोऽपि समुज्जिहीते ॥ १३ ॥

तदिदं शङ्कितव्यं प्रतिविधातव्यं च ।

52 रावणः । आः किमिह शङ्कया प्रतिविधानेन वा । अनेन हि

कोलाहलेनोल्लसता कपीनां
मनो मदीयं मुदमेव धत्ते ।
मन्दोदरीनूपुरभूषणानां
महामणीनामिव सिञ्जितेन ॥ १४ ॥

---

47. F. om अहो. D. चित्रकस्य & C. E. G. चित्रकरस्य.

48. C. D. E. F. इय ( which D. om ) मलीकसंभावना ( F. शङ्का ) for इदम...भावना.

49. 50. 51. D. F. om. कलकल ...प्रहस्त.. A. असौ for एषाम् A. has not दर्पोद्धतानाम् for which D. has पादोद्धुराणाम् & F. दर्पोद्धुराणाम्. D. अपि for कपि & नव्य for नव. All except A. B. repeat प्रहस्तः before तदिदम् &c. A. C. E. F. इह for इदम्. B G. वा for च.

52. C. E. F. च for वा. D. मन्दोदरीयम् for मनो मदीयम् F. G. भूषणनूपुराणाम्. A. सिञ्जितानि.

53 प्रविश्य मन्दोदरी । जेदु जेदु देवो ।

54 रावणः । देवि इत आस्यताम् ।

55 मन्दो० । यथोचितमुपविश्याधोमुखी तिष्ठति ।

56 रावणः ।

भुग्नालकं स्मितपराजितचन्द्रलोकं
दृग्लीलया कुवलयाश्रियमादधानम् ।
एतन्मुखं दिविषदामपि दुर्निरीक्ष्यं
तन्वङ्गि मामिव मुधा किमधः करोषि ॥ १५ ॥

57 प्रहस्तः । देव कपिसेनाकोलाहलचिन्तयैव नूनमधरीकृतमुखी देवीति तर्कयामि ।

58 रावणः । आः क एष चिन्ताविषयः ।

इयं लीलालोलाङ्गदभुजलता नीलचिकुरा
समुन्मीलत्तारा कुमुदहसिता चारुनयना ।
प्लवङ्गानां सेना युवतिरिव तारापतिमुखी
ममाग्रे कन्दर्पं प्रकटयितुमद्य प्रभवति ॥ १६ ॥

59 मन्दो० । देव अण्णं पि अत्थि कालणम् । अज्ज हि मए देवस्स

---

53 जयतु जयतु देवः ।

59 देव अन्यदप्यास्ति कारणम् । अद्य हि मया देवस्य शकुननिरूपणार्थं गिरिशिख-

---

53. F. जेदु देवो जेदु देवो.
54. D. om. रावणः.
56. F. आः before भुग्न.° G °चन्द्रलेखम्. A. आददानम्. G. इव for अपि.
57. F. कपिकुल.° A. D. °कृतमुखा & C. E. °कृतवती मुखम्.
58. D. F. om. आः. B. C. E. इदानीं हि before इयम्.
59. A. जइ वि for अज्ज हि. D.

सउणणिरूवणत्थं गिरिसिहरगहणगम्भट्ठिदां सबरपल्लीं पट्ठाविदा णिअपरिआरिआ । ताए अ कीए वि सबरकुडुम्बिणीए णिअघरपेरन्तवासिणं केसरिकिसोरअं उल्लावअन्तीए एरिसं वअणं आअण्णिदम् ।

मा होहि णाअवइणो परिहवमेत्तेण गव्वणिव्वूढो ।
वसुहामिमं गिरिसंकडमइंदसरहस्स णन्दणो पत्तो ॥ १७ ॥

60 रावणः । किमिह विषादस्थानम् । अस्मान्प्रत्युदासीनमेवैतत् ।

61 प्रहस्तः । देव अन्यथापि घटमानमिदम् ।

मा भव नाकपतेः परिभवमात्रेण गर्वनिर्व्यूढः ।
वसुधामिमां गिरिसंकटमयीं दशरथस्य नन्दनः प्राप्तः ॥ १८ ॥

62 रावणः । आः केयं निसर्गनिःशङ्के लङ्केश्वरे मयि शकुनोपश्रुतिपरीक्षा ।

---

रगहनगर्भस्थितां शबरपल्लीं प्रस्थापिता निजपरिचारिका । तया च कस्या अपि शबरकुटुम्बिन्या निजगृहपर्यन्तवासिनं केसरिकिशोरकमुल्लापयन्त्या ईदृशं वचनमाकर्णितम् ।

भा भव नागपतेः परिभवमात्रेण गर्वनिर्व्यूढः ।
वसुधामिमां गिरिसंकटमहेन्द्रशरभस्य नन्दनः प्राप्तः ॥

---

मज्झट्ठिव्वम् for गम्भट्ठिदाम्. B. F. °ट्ठिदम्. D. सबरपत्तीं सट्ठा.° C. D. E. om. अ after ताए. F. किंपि for कीए वि. D. °पुरएन्तिवासिणम् & F. °पुरपेरन्तवासिणम् after घर. A. केसर. E. अवलोअअन्तीए. A. संउड (संकुट?) for संकड.

60. A. om. this speech. F. किमिदम्. After एतत् B. G. have तथाहि । मा भव नागपतेः ... संकटमयीं मृगेन्द्रशरभस्य ... प्राप्तः.

61. C. D. E F. om. देव. G. om. अपि. A. B. घटयति. G. नागपतेः. F दशरथ°. D. तनयः.

62. F. कोऽयम्. B. om. निसर्ग. D. om. निःशङ्के. A. लङ्केश्वरेऽपि. C. E. °उपश्रुतिः only.

63 नेपथ्ये ।

हेलास्फालितरामलक्ष्मणधनुर्ज्यावल्लरीझल्लरी-
झङ्कारप्रसरप्ररूढपुलकप्राग्भारनीरन्ध्रिताः ।
व्यावल्गत्कपिकण्ठकाण्डकदनक्रीडत्कृपाणाञ्चल-
स्फूर्जद्दुर्जयदोर्बलैकचपलाश्चञ्चन्ति रात्रिचराः ॥ १९ ॥

64 रावणः । सहर्षम् । अये निशाचरवीरविजयोत्तरः समरः ।

65 पुनर्नेपथ्ये ।

अग्रेसरी रघुपतेः परिणद्धपाक-
किम्पाकपाटलमुखी कपिवीरसेना
निःशेषमापिबति राक्षसवीरचक्रं
प्रातःप्रभेव तपनस्य तामिस्रजालम् ॥ २० ॥

66 रावणः । आः कथमुत्कण्ठायितं मर्कटैः । उच्चै । कः कोऽत्र भोः । मदाज्ञया

कृत्वा विनिद्रमपनिद्रभुजावलेपः
प्रोद्दामरामसमराय स कुम्भकर्णः ।
आदिश्यतां निजभुजाजितवज्रपाणि-
रद्यैव लक्ष्मणरणाय च मेघनादः ॥ २१ ॥

67 नेपथ्ये । देव भवदाशयविदा महामन्त्रिणा माल्यवता पूर्वमेव संविहितमिदम् । इदानीं हि

---

63. A. व्यावल्गकीसंभव. C. D. E. F. झाङ्कार. A. has not पुलक. D. व्यावर्तत्कपि°. A. °कदने.

64. B. om. रावणः. C. E. °विक्रमोत्तरः.

65. A. B. अग्रेसरा.

66. C. E. repeat कः कोऽत्रभोः. A. अवलेश°. A. भुजार्जित, B. G. भुजार्दित, & D. शरीर्जित. C. E. तत्रैव. A. D F. स for च.

67. B. प्रहस्तः & A. G. पुनः before नेपथ्ये. D. om. देव. D.

रामेण सार्धमयमुद्धतबाहुदर्पः
संग्राममूमिमधितिष्ठति कुम्भकर्णः।
रक्षःशिखण्डिहृदयोत्सवमेघनादः
सौमित्रिणा सममसावपि मेघनादः ॥ २२ ॥

पुनर्नेपथ्ये।

यद्दंष्ट्रावज्रघातैः समिति विदलिताः शैलकल्पाः कपीन्द्रा
यन्नाराचाम्बुवर्षैर्दवदहनसमाः शामिता वानरेन्द्राः।
वीरोऽसौ कुम्भकर्णः स च समरकलाकौतुकी मेघनादः
संजातौ

68 रावणः। किमतः परं वदिष्यति।

69 पुनर्नेपथ्ये।

हा पतङ्गौ दशरथसुतयोर्दारुणे बाणवह्नौ ॥ २३ ॥

मन्दोदरीरावणौ मूर्छतः।

70 प्रहस्तः। देव समाश्वासिहि समाश्वसिहि।

71 रावणः। समाश्वस्य। देवि समाश्वासिहि समाश्वसिहि।

72 मन्दो॰। समाश्वस्य। परित्ताअदु मं अज्जउत्तो। एसा णिमग्गम्हि सोअतिमिरे।

---

72 परित्रायतां मामार्यपुत्रः। एषा निमग्नास्मि शोकतिमिरे।

---

संहितम् & F. विहितम्. A. दर्प°. F. शान्तिताः for शामिताः. D. F. धीरोऽसौ.

68. A. om. this speech & reads 69 in continuation of संजातौ of 67. C. E. F. सविषादम्.

69. All except G. om. पुनर्नेपथ्ये. A. मूर्छितौ पततः.

70. A. D. F. om. one समाश्वसिहि.

71. A. om. समाश्वस्य. B. D. F. om. one समाश्वसिहि.

73 रावणः। अयि अलं कातरतया। अयं चन्द्रहासचन्द्र एव शोकतिमिराद्धुद्धरिष्यति भवतीम्। उत्थाय खड्गमुत्पाट्य। पश्य अयमसौ मे

भिन्नप्रभिन्नसुरकुञ्जरकुम्भमुक्त-
मुक्ताफलप्रकरकैः कलिताधिवासः।
अद्यैव खेचरनिशाचरलोचनाना-
मुन्मीलयन्मुदमुदञ्चति चन्द्रहासः॥ २४॥

इति प्रहस्तेन सह निष्क्रान्तः।

74 मन्दो०। अये अच्चरिअं। समरसंरम्भविलोअणविम्हअत्थिमिदमिदं विज्जाहरमिहुणं किंपि मन्तेदि। तेण हि अज्जउत्तविजअत्थं अहं पि णिअकुलदेवदाओ अच्चिदुं गच्छम्मि। इति निष्क्रान्ता।

ततः प्रविशति विद्याधरमिथुनम्।

75 विद्याधरः। प्रिये पश्येदम्।

रणे मुक्तप्राणा रजनिचरवीरा दिनमणिं
विशन्तः शोभन्ते कमलमिव सायं मधुलिहः।

---

74 अये आश्चर्यम्। समरसंरम्भविलोकनविस्मयस्तिमितमिदं विद्याधरमिथुनं किमपि मन्त्रयते। तेन हि आर्यपुत्रविजयार्थमहमपि निजकुलदेवता अर्चितुं गच्छामि।

---

73. D. शोकसमुद्रात्. All except A. B. put पुनः before उत्थाय. C. E. उत्पाद्य & G. उद्यम्य. D. F. om. मे. A. B. have अयमसौ मे पश्य (B. one more पश्य). A. मुक्ताफलैर्विरचितैः.

74. A. om. अये & repeat अच्चरिअम्. D. विम्हअत्थं. A. F. om. इदम्. B. C. E. किंपि किंपि. D. F. om. हि. A. B. G. अज्जउत्तस्स. A. B. °देवदाम्. C. D. E. F. वज्जामि.

75. A. G. have not this speech, while D. puts it after 76, omit-

अथामीभिर्भिन्नं गगननवकुञ्जोदरदरी-
मयच्छत्रच्छायामनुभवति बिम्बं दिनकृतः ॥ २५ ॥

76 विद्याधरी । अज्जउत्त को इमो रणरहसविअसन्तपुळअभरकुड्मळिदभुअवणो कविचमूचक्कं अहिवट्टदि ।

77 विद्याधरः । स एष रामसमरकौतुकी दशकण्ठः ।

78 विद्याधरी । को उण एसो अञ्जणपुञ्जच्छविसरीरो कविवीरो तस्स संमुहं परावट्टदि ।

79 विद्याधरः । प्रिये स एष विचित्रसमरशीलो नीलः । विलोक्य सविस्मयम् । अहो

वक्षःस्थले झटिति नीलकरोज्झितेन
नीलाचलस्य शिखरेण कृतप्रहारः ।
लङ्केश्वरः स्मरति नूनमसौ वतंस-
नीलोत्पलप्रहरणं हरिणेक्षणानाम् ॥ २६ ॥

पुनः सकौतुकम् । पश्य पश्य ।

नीलोऽयं दशमुखपाणिपङ्कजाना-
मङ्केषु भ्रमरतुलां भ्रमन्बिभर्ति ।

---

76 आर्यपुत्र कोऽयं रणरभसविकसत्पुलकभरकुड्मलितभुजवनः कपिचमूचक्रमभिवर्तते ।
78 कः पुनरेषोऽञ्जनपुञ्जच्छविशरीरः कपिवीरस्तस्य संमुखं परावर्तते ।

---

ting विद्याधरः of 77. All except B. read एवम् for इदम्. B. D. F. वन for नव. C. E. F. मधु for मय.

76. C. E. F. हरस & D. रस for रहस. A. B. om. भर. D. कुण्डलित.

77. B. G. प्रिये before स. C. D. E. F. om. राम.

78. B. om. उण. A. F. इमो उण. A. B अहिवट्टदि.

79. A. om. समर. A. B. स एष after वि... शीलः instead of before it. A. om. अहो. B. किमिति for

अप्येको दशसु किरीटपीठिकासु
द्राक्प्रेङ्खन्ननुभवतीन्द्रनीललीलाम् ॥ २७ ॥

80 विद्याधरी। को उण इमो णिसाअरो णिसाअरेन्देण समं समरसाहसमङ्गीकरिअ चिट्ठदि।

81 विद्याधरः। स एष स्वामिपक्षपाती बिभीषणः। सविषादम्। हन्त भोः

येयं बिभीषणे मुक्ता शक्तिः क्रूरेण रक्षसा।

82 विद्याधरी। अह किं ताए।

83 विद्याधरः।

लक्ष्मणेन गृहीतेयं प्रियेव निजवक्षसा ॥ २८ ॥

84 विद्याधरी। हद्धि हद्धि।

85 विद्याधरः।

वर्षन्नेष समन्ततो दशमुखं चापच्युतैः सायकैः
सौमित्रिं च विसंज्ञमङ्कनिहितं नेत्रच्युतैरम्बुभिः।

---

80 कः पुनरयं निशाचरो निशाचरेन्द्रेण समं समरसाहसङ्गीकृत्य तिष्ठति।

82 अथ किं तस्याः।

84 हा धिक् हा धिक्।

---

झटिति. A. B. D. करोद्धृतेन. A. B. D. G. वसन्त for वतस. C. E. हरिणेक्षणायाः. D. F. om. one पद्य. D. पाटिकासु.

80. A. om. उण. D. F. G. om. णिसाअरो.

81. D. F. om. स. C. D. E. F. पुनः before सविषादम्. A. om. हन्त भोः. B. G. शक्तिर्मुक्ता.

85. A. B. D. F. एव for एष. A. श्यामलशौर for चामलकेलि. C. E. वीरकेलि. All except A. have करुणा. D. वाहते. B. शर for बाण.

एतत्तर्कय हर्षशोकतरलाः कुर्वन्कपीनां दृशो
रामश्चामलकेलिवीरकरुणव्यामिश्रतां गाहते ॥ २९ ॥

विलोक्य । कथमपगत एव रामबाणपीडितो दशकण्ठः ।

86 नेपथ्ये ।

हा वत्स लक्ष्मण विकासय नेत्रपद्मे
मागादिदं युगपदेव समस्तमस्तम् ।
भाग्यं दिवाकरकुलस्य च जीवितं च
रामस्य किं च नयनाञ्जनमूर्मिलायाः ॥ ३० ॥

87 विद्याधरः । हन्त सोऽयमनुजवत्सलस्य रामस्य विलापः ।

88 नेपथ्ये । देव समाश्वसिहि समाश्वसिहि ।

89 विद्याधरी । कहं सुग्गीवेण समासासिअदि रामचन्दो । ता किं दाणिं आलविस्सदि ।

90 विद्याधरः । आकर्णयावस्तावत्सुग्रीवेण समाश्वास्यमानः किमाह राघवः ।

---

89 कथं सुग्रीवेण समाश्वास्यते रामचन्द्रः । तत्किमिदानीमालपिष्यति ।

---

86. A. has not °ण विकासय. D, पद्मनेत्रे.
87. A. om. रामस्य.
88. A. D. one समाश्वसिहि.
89. A. C. E F. om. this speech, D. किं पि.
90. F. om. विद्याधरः. A. D. G. आकर्णयामः. A. B. D. सुग्रीव (A. व) समाश्व (B. श्वा) स्यमानः. C. E. आश्वास्यमानः. B. F. राम: (B. °भद्रः) किमाह. For राघवः A. has रामभद्रः, D रामचन्द्रः, & G. रामः.

91 नेपथ्ये। सखे सुग्रीव कथं समाश्वस्यते।

अयि राघवाविति सुधामधुरं
विनिपीय पौरमुनिलोकवचः।
अयि राघवेति गरलप्रतिमं
कथमद्य रामहतकः पिबतु ॥ ३१ ॥

अपि च।

कनीयस्या मातुः कृतचरणपातः कथमहं
सहिष्ये मत्पार्श्वे विफलपरिवर्तं नयनयोः।
अये शान्तं पापं कठिन इति चेज्जीवति मना-
ग्विना वत्सं रामः कथमयमयोध्यां प्रविशति ॥ ३२ ॥

92 विद्याधरः। अहह करुणैकार्णवो वर्तते। विमृश्य। कः पुनरिह प्रतीकारः। विचिन्त्य। अथ वा का प्रतीकारकथा। वक्रो हि विधिः।

93 विद्याधरी। वक्कदरोत्ति भणिदव्वं। इदो पेक्ख। णं इमो वाणरो जेव्व कोवि लङ्केसरकिदसंधाणो करकलिदसेलसिहरो रामसंमुहं जेव्व परावट्टदि।

---

93 वक्रतर इति भणितव्यम्। इतः प्रेक्षस्व। नन्वयं वानर एव कोऽपि लङ्केश्वरकृतसंधानः करकलितशैलशिखरो रामसंमुखमेव परावर्तते।

---

91. D. F. G. आश्वास्यते. A. अपि for इति; परिपीय, & पिबतु. A. om. अपि च. A. B. G. इव for इति. A. B. D. G. जीवितुमनाः. A. B. F. G. पुनः for कथम्.

92. D. om. अहह ... वर्तते. B. अत्र for इह. C. D. E. परिहारः for प्रतीकारः. B. om. विचिन्त्य & puts वा after का. D. परिहार° for प्रतीकार°.

93. All except A. E. read भणिदव्वम्. A. B. विलोक्य before इदो. G इदम्. C. E. गिरि for सेल. D. रामस्स. D. F. G. परिवट्टदि.

94 विद्याधरः । कर्णौ पिधाय । शान्तं पापं शान्तं पापम् । अयि मुग्धे मैवं वादीः । अयं हि

महौषधीनामाधारं भूधरं गन्धमादनम् ।
आदाय लक्ष्मणप्राणत्राणायाभ्येति मारुतिः ॥ ३३ ॥

पुनर्विलोक्य सहर्षम् ।

आमोदमाघ्राय महौषधीनां
सौमित्रिरुन्मीलितनेत्रपद्मः ।
भूयोऽपि चक्रीकृतचारुचापः
करोति रामं परिपूर्णकामम् ॥ ३४ ॥

95 विद्याधरी । कहं पुणोवि रामरणकोदूहलफुल्लन्तभुअदण्डमण्डलो णिसाअराखण्डलो परावट्टिदो जेव्व ।

96 विद्याधरः । प्रिये तदिदानीं सावधानमवलोकय । तुलाधिरोहः खल्वयं वीरलक्ष्म्या यन्नाम रामरावणयोः समर इति ।

---

95 कथं पुनरपि रामरणकौतूहलफुल्लद्भुजदण्डमण्डलो निशाचराखण्डलः परावर्तित एव ।

---

94. B. G. have शान्तं पापम् only once. Between मारुतिः & पुनर्विलोक्य F. has विद्याधरी । ताजीविदम्हि । विद्याधरः. A. पश्य पश्य & B. पश्य after सहर्षम्. G पद्मनेत्रः & रामः.

95. A. D. रामो & B. रामस्स. A. समर for रण which B. om. A. B. कोदूहलं सुणिअ फुरन्त°. A. B. D. G. om. दण्ड. D. णिसाअरखण्डणो. C. D. E. F. परा (D. F. परि) वट्टिदे. G. परावडिदो. A. B. परावट्टिदो जेव्व णिसाअराखण्डलो.

96. D. तदानीम्. A. इतस्ततः for इदानीम्. D. F. G. विलोकय. C. E om. नाम.

97 विद्याधरी । कहं उण सअललोएक्कवीरस्स रामचन्दस्स अणेअवी-
रपरिहूदस्स रावणस्स तुलाधिरोहो वीरलच्छीए हविस्सदि ।

98 विद्याधरः । प्रिये न जानासि । कथय विना दशकण्ठम्

विन्यासं नाकनारीकुचकलशलसत्कुङ्कुमस्थासकाना-
मस्पृष्ट्वा मार्ष्टुमासीद्रसिकलहकलाकोविदः को विदग्धः ।
भिन्नस्वर्गेभकुम्भस्थलबहलगलन्मौक्तिकव्यक्तहासः
कस्याक्रीडत्कराग्रे त्रिदशपतियशश्चन्द्रहा चन्द्रहासः ॥ ३९ ॥

अपि च ।

किं ब्रूमो दशकन्धरं निजचमूरक्षाकपाटीभव-
द्वक्षःपीठपतत्कठोरकुलिशाघातेषु जातस्मितम् ।
व्योमाभोगसरोविलासिनि वने यत्पाणिपङ्केरुहां
कैलासेन शिरःस्थितेन्दुकलिकोत्तंसेन हंसायितम् ॥ ३६ ॥

99 नेपथ्ये ।

हेलोन्मूलितचन्द्रचूडगिरयस्त्रैलोक्यदत्तापदो
लङ्कातङ्कहराः पुरन्दरपुरस्त्रीवृन्दबन्दीकृतः ।

---

97 कथं पुनः सकललोकैकवीरस्य रामचन्द्रस्यानेकवीरपरिभूतस्य रावणस्य तुला-
धिरोहो वीरलक्ष्म्या भविष्यति ।

---

97. B. D. F. G. om. एक्क. A. B. D. F. रामस्स. C. D. E. F. प-रिहदस्स. E. रावणस्स वि. A. समर° & B. समरो before तुला°.

98. B. C. E. F. G. कथ दशक-ण्ठं ( G विना ). A. कलभ for कल-ह. C. दशास्यम् & E. दशास्यात् for विदग्धः. A. कः स्यात् for कस्या°. A. वक्षः for रक्षा & पीन for पीठ. B. कठोरपीत for पतत्कठोर. C. E. F. °घातेऽपि.

99. B. लब्धोत्सवाः for बद्धस्पृहाः.

वैदेहीकुचकुम्भकुङ्कुमरसव्यासङ्गबद्धस्पृहाः
सोत्कर्षं दशकन्धरस्य जयिनः खेलन्ति दोःकेलयः ॥ ३७ ॥

100 पुनर्नेपथ्ये ।

हेलोन्मूलितचन्द्रचूडधनुषस्त्रैलोक्यदत्ताभया
लङ्कातङ्ककराः पुरन्दरपुरस्त्रीवृन्दबन्दीमुचः ।
वैदेहीकुचकुम्भकुङ्कुमरसव्यासङ्गलब्धोत्सवाः
सोत्कर्षं दशकन्धरस्य जयिनः खेलन्ति दोःकेलयः ॥ ३८ ॥

101 विद्याधरः । नूनमयं राक्षसवानराणां निजस्वामिवर्णनानुसारी व्याहारः ।

102 विद्याधरी । कहं उण रहट्ठिदेण रावणेन समं भूमिट्ठिदस्स राहवस्स समरो हविस्सदि ।

103 विद्याधरः । प्रिये पश्य । आनीत एव मातलिना पुरुहूतरथः । अधिष्ठितश्च विनयाभिरामेण रामेण ।

104 नेपथ्य । अये कथम्

पूर्वमेव प्रयातानां खरमारीचवालिनाम् ।
सौजन्यमुग्धः पन्थानमनुवर्तितुमीहसे ॥ ३९ ॥

---

102 कथं पुना रथस्थितेन रावणेन समं भूमिस्थितस्य राघवस्य समरो भविष्यति ।

---

D. F. G. सोत्कण्ठम् for सोत्कर्षम्.
100 D. om पुनः. A. D. बद्धोत्सवाः. D. सोत्कण्ठम्.
101. D. F. G. °वानरयोः. A. D. व्यवहारः.
102. C. E. om. समम्. B. रामस्स.

103. A. B. विलोक्य before प्रिये A. B. C. E. om. प्रिये. F. om. पश्य but C. E. repeat it. A. B. अयम् before आनीतः. A. B. D. F. विनयारामेण.
104. D. अथ for अये & °मुग्धम्. All except A. B. have अधिवर्तितुम्.

105 विद्याधरः । आकर्णयावस्तावदनेन रामवचनेन पीडितः किमाह रावणः ।

106 नेपथ्ये ।

खरः कीदृग्वाली कपिरपि च मारीचहतकः
कुरङ्गस्तान्हत्वा कथमपि कथं दृप्यसि मनाक् ।
अयं पश्य प्राप्तो दशवदननामा सुरपुरी-
करीन्द्राणां हेलारचितकदनः पञ्चवदनः ॥ ४० ॥

अथ वा ।

कालीकेसरिकेसराञ्चलसटासाटोपसंपादित-
क्रीडाचामरकोमलानिललवाचान्तश्रमाम्भःकणः ।
श्रीमानेष दशाननो विजयते तस्यास्य पञ्चानन-
व्यापारप्रतिपादनैरपि यशः कीदृक्समुन्मीलति ॥ ४१ ॥

107 विद्याधरः । अये दशवदनवचनकुपितः किमपि वक्तुकाम इव लक्ष्यते लक्ष्मणः ।

108 नेपथ्ये । किं ते पञ्चाननतया दशाननतया वा । त्वमिदानीम्

दूरोन्मुक्तमदो बिभीषण इव न्यञ्चच्छिरःशेखरः
स्वच्छन्दं चरणारविन्दयुगले रामस्य भृङ्गो भव ।
रे नक्तंचर कुम्भकर्ण इव वा कर्णान्तचक्रीभव-
च्चापात्सङ्गविमुक्तबाणदहने सद्यः पतङ्गो भव ॥ ४२ ॥

---

105. F. G. आकर्णयामः.
106. C. E. पुनर्नेपथ्ये. A. कथयसि for कथमपि. C. D. E. हृष्यसि for दृप्यसि. D. सुररिपुः कपी°. A. °केसराचल. A. C. E. यस्यास्य.

107. D. F. om. अये.
108. G. om. ते. A. D. om. वा. A. B. हि after इदानीम्. A. दूरात् & न्यस्यत्.

109 विद्याधरी । पेक्ख पेक्ख । णं इदो सरन्धआरं वित्थारअन्तेण णि-
सामुहाायिदं दसमुहेण ।

110 विद्याधरः । नन्वितस्तदेव निशितविशिखमयूखधारया निवारयता चन्द्रायितं रामचन्द्रेण । पुनः सकौतुकम् । अये नूनमयं दिव्यास्त्रलीलया प्रतिहतदिव्यास्त्रं निकृत्तचापं रावणं किमपि वक्तुकाम इव दृश्यते रामः ।

111 नेपथ्ये ।

निकृत्तचाप इति मा संतापतरलो भव ।
शस्त्रमन्यदपि स्वैरं समरे समलङ्कुरु ॥ ४२ ॥

112 विद्याधरी । आकण्णीअदु दाव किं दाणिं भणादि रावणो ।

113 नेपथ्ये ।

आकर्णितस्तव दशाननबाहुदण्ड-
श्रीखण्डकाननफणीव न चन्द्रहासः ।

---

109 प्रेक्षस्व प्रेक्षस्व । नन्वितः शरान्धकारं विस्तारयता निशामुखायितं दशमुखेन ।
112 आकर्णयतु तावत्किमिदानीं भणति रावणः ।

---

109. E. णूणं for णं which D. F. G. om. B. सरन्धआरअं. E. णिसाअरेण before णिसामुहा.

110. A. देवि for तदेव. All except A. B. read निज for निशित. B. om. विशिख. D. G. om. मयूख. A. निचयैः & B. चयैः for धारया. F. G. विनिवारयता. D. F. चन्द्रायितं रामचन्द्रेण निवारयता. A. C. E. om. अये. C. E. om. प्रति. A. B. सकल after प्रतिहत. A. °अस्त्रानिकृत्त. G. कमपि. D. एव for इव. B. लक्ष्यते for दृश्यते which D. F. G. om.

111. A. B. G. संक्षोभ. D. शील for तरल. A. B. D. G. ननु रे समरे for समरे समलम्. D. reads the second line thus :—अन्यदस्त्रमपि स्वैरं ससव्यमलङ्कुरु.

112. F. आकलिअदु. C. E. दाणिं किं.

113. C. E. F. °फणी नव°. B. G. भव for पव. G, एव for इव. C.

येन स्वनामपदसाम्यरुषेव पीतः
स्वर्लोकलोलनयनामुखचन्द्रहासः ॥ ४४ ॥

114 विद्याधरः । लीलादलितचन्द्रहासः सोत्प्रासः किमधुना वदति रावणं रामचन्द्रः ।

115 नेपथ्ये । अयि तावदधुना लङ्केश्वरः खिद्यते ।

116 विद्याधरी । किं दाणिं जम्पिस्सदि रावणो ।

117 नेपथ्ये । कथमधुनैव खिद्यते लङ्केश्वरः । ननु रे
विध्वस्ता दशभिर्भुजैर्दश दिशः प्रत्येकमेते पुन-
र्भारायैव दशापरे मम गिरिप्राग्भारभाजो भुजाः ।
आराध्यः शशिमौलिरम्बुधिजले निद्राति नारायणः
किंकर्तव्यतयानयानुदिवसं लङ्केश्वरः खिद्यते ॥ ४९ ॥

118 विद्याधरी । वअणमेत्तं दाणिम् ।

119 विद्याधरः । न हि न हि । पश्य । नन्वयमिदानीमपि
धनुर्निस्त्रिंशादिप्रहरणगणच्छेदकुपितो
दशास्यः स्वान्मूर्ध्नो रघुपतिशरश्रेणिदलितान् ।

---

116 किमिदानीं जल्पिष्यति रावणः ।

118 वचनमात्रमिदानीम् ।

---

E. F. ललना for ॰नयना॰. D. F. आनन for मुख.

114. A. om. सोत्प्रासः. D. F. स before किम्. C. E. वक्ष्यते & D. F. वक्ष्यति. C. D. E. F. om. रावणम्.

115. A. F. अपि for अयि.

116. C. om. this speech. A. G. किंपि. E. भणदि.

117. C. om. नेपथ्ये ...लङ्केश्वरः. A. किम् for कथम्. C. E. G. अद्यैव लङ्केश्वरः खिद्यते. A. खिद्याति. D. अम्बुधितले.

119. F. G. one more पश्य. A. om. अयम्. G. has not one एकैः.

कैरेरकैरेकैर्नभसि भृशमादाय युगप-
त्क्षिपन्नन्यैरन्यैः सफलयति दोर्विंशतिमपि ॥ ४६ ॥

पुनः सकौतुकम् ।

एतान्यस्य यथा यथा सुविशिखैः कृत्तानि रक्षःपते-
रुद्गच्छन्ति शिरांसि भीतिपुलकैः साकं दिवौकःपतेः ।
उन्मीलन्ति तथा तथा रघुपतेरन्तःप्रमोदोर्मयः
कण्ठच्छेदविनोदकौतुकभरव्यग्रीभवच्चेतसः ॥ ४७ ॥

120 विद्याधरी । कहं अज्जवि णिसाअरेन्दबन्दीकिदसुरसुन्दरीणं दंसणं दुल्लहं जं इमस्स सीसाइं पुणो पुणोवि उम्मीलन्दि ।

121 विद्याधरः । अलं तापेन । क्रीडति खलु रामः सह रावणेन । न पुनरद्यापि कुप्यति । पुनर्विलोक्य सकौतुकम् । प्रिये पश्य पश्य ।

अन्तःसान्द्रवसन्महेश्वरशिरःशीतांशुलेखोल्लस-
त्पीयूषद्रवशीकरव्यतिकरप्राग्भारभाजामिव ।
छिन्नानामपि रामचन्द्रविशिखैर्भूयः समुद्गच्छतां
काप्यन्यैव निशाचरेन्द्रशिरसां कान्तिः समुज्जृम्भते ॥ ४८ ॥

---

120 कथमद्यापि निशाचरेन्द्रबन्दीकृतसुरसुन्दरीणां दर्शनं दुर्लभं यदस्य शीर्षाणि पुनः पुनरप्युन्मीलन्ति ।

---

C. E. सार्धम् for साकम्. A. यथा तथा.

120. D. om. कहम्. C. E. उणो & F. उणो वि after कहम्. D. om. वि after अज्ज. A. D. F. संदंसणम्. A. om. वि.

121. A. B. C. E. om. प्रिये. D. F. one पश्य. G. सान्द्रवहन्. A. महेन्द्रशिरस॰ & लेखोच्छलत्. A. प्रांग्भव्य, B. C. E. प्रागल्भ्य, & D. प्राग्भाग for प्राग्भार. F अपि for इव. B. रामभद्र & निशाचरास्यशिरसाम्. A. B. om. विहस्य. G. °पीठे & om मुदम्. D. देहे for देवी. A. B. जनकनृप.

पुनः सकौतुकं विहस्य । अहो अस्य चित्तवृत्तिः ।

अयं यावद्यावत्पृथुहृदयपीठं रघुपतिः
शिरश्छेदासक्तो न दशवदनस्य व्यथयति ।
अयं तावत्तावद्वहति मुदमुच्चैर्दशमुखः
किलैतस्मिन्देवी जनकपतिपुत्री निवसति ॥ ४९ ॥

122 नेपथ्ये । अये राम

किं क्रीडसि शरस्तोमैर्नन्वेकेनैव पत्रिणा ।
परिपूरय नः कामं यशसा च जगत्त्रयम् ॥ ५० ॥

123 विद्याधरः । नूनममी दिवौकसस्त्वरयन्ति रामचन्द्रम् । तच्छृण्वन्किमधुना वक्ष्यति रावणः ।

124 नेपथ्ये । रे रे मम भुजाः

मुक्त्वैकां हरशेखरप्रणयिनीं पीयूषभानोः कलां
दिक्पालावलिमौलिमण्डनमणीन्गृह्णीत सर्वानपि ।
तैः काञ्चीं रचितां चिराय वहतु श्रोणीतटे जानकी
गायन्ती कमनीयगुञ्जितभरैर्मद्विक्रमाडम्बरम् ॥ ५१ ॥

125 विद्याधरः । विहस्य । अये लङ्केश्वर समयज्ञोऽसि यद्भुजानेव नियुक्तवानसि । अधुना हि भुजमण्डलमेव परिवारवर्गस्ते । विलोक्य

---

123. B. रामभद्रम्. C. E. श्रुत्वा for शृण्वन् which D. om.

124. D. om. नेपथ्ये .. भुजाः. C. रावणः for नेपथ्ये. A. B. अये for रे रे. A. B. F. भुजदंडा. (A. °ड) for मम भुजाः, after which C. E. add यूयम्. D. शशिशेखर. A. has not मौलि. A. B. भूषणमणीन्. A. B. G. सिञ्जितभरैः. A. °डम्बरीम्.

125. C. E. G. om. अये. C. E. put ते after हि instead of after °वर्ग: which D. om. A. B. सकौतुकम्. A. B. किम् for कथम्. A. अनेनैव & om. दशानन. C. E. किमपि for

साकूतम्। अये कथमनेन दशाननवचनेन किंचित्कुपित इव दृश्यते जानकीकान्तः। पुनः सहर्षविषादम्। हन्त भोः

विकचकुसुमस्तोमाकीर्णे परागविभूषितः
शशिमणिशिलातल्पेऽनल्पे सलीलमशेत यः।
अयमयमसौ रोषारूढे क्षणं रघुनन्दने
भुवि दशमुखः शेते धूलिच्छटापरिधूसरः॥ ९२॥

126 विद्याधरी। सहर्षम्। ता दाणिं जेव्व जणअणन्दिणी रामचन्देण समं संगमिस्सदि।

127 विद्याधरः। अथ किम्। विलोक्य। नन्वियमसौ

उद्दामहेतिवलयैः परिदीपिताशं
पश्य प्रविश्य जनकेन्द्रसुता हुताशम्।
अभ्युद्गता समधिकां द्युतिमुद्वहन्ती
प्रातर्मयूखकलिकेव दिवाकरस्य॥ ९३॥

128 विद्याधरी। पेक्ख पेक्ख इमो असमसमरकअत्थिदं पदेसं अवतरइ रामचन्दो।

---

126 तदिदानीमेव जनकनन्दिनी रामचन्द्रेण समं संगमिष्यते।

128 प्रेक्षस्व प्रेक्षस्व। अयमसमसमरकदर्थितं प्रदेशमवतरति रामचन्द्रः।

---

किञ्चित्. D. एव for इव. C. E. लक्ष्यते for दृश्यते which D. F. om. D. F. om. हन्त भोः. C. D. E. चिकुर for विकच. C. E. F. स्तोमास्तीर्णे. A. B. तल्पेनाल्पे. A. क्षणे.

126. A. तदाणिम् & जणअराअ°.

127. D. G. om. विलोक्य... असौ. A. om. विलोक्य. F. om. असौ. A. हेमवलयैः. D. F. G. प्रत्युद्गता. G. आवहन्ती. A. प्रात्यामयूख°.

128. F. om. one पेक्ख. A. B. इमो (B. अम्मो) सपरिवालो (B. अअं) समरभूमिं उत्तरइ, & D. असमसमकरकअं पदेसं ओदरदि (?) for इमो ... अवतरइ.

129 विद्याधरः। तदेहि कर्णामृतमिदं पुलोमजायै निवेदयावः।

इति निष्क्रान्तौ।

ततः प्रविशति रामः सीतालक्ष्मणौ सुग्रीवविभीषणौ च।

130 रामः। अये कथमुपगत एव भगवानम्बरमणिश्चरमाचलचूडाम्।

131 लक्ष्मणः। पश्चिमपयोधिवेलां च। नन्विदानीम्

उद्दामदिग्द्विरदचञ्चलकर्णपूर-
गण्डस्थलोच्चलदलिस्तबकाकृतीनि।
मीलन्नभांसि मृगनाभिसमानभांसि
दिक्कन्दरेषु विलसन्तितमां तमांसि॥ ९४॥

132 रामः। अये कथमुज्जृम्भितमेव निशाचरचक्रानुकारिणा तिमिर-निकरेण।

133 विभीषणः। नन्वितोऽपि समुन्मीलितमेव रामनाराचनिकुरम्बकुटु-म्बिना तुहिनकरकिरणकदम्बकेन।

134 सुग्रीवः। एवमेतत्। अमी हि

क्षीराब्धेर्लहरीषु फेनधवलाश्चन्द्रोपलेषु स्रव-
त्पाथःशीकरिणो विकासिकुमुदक्रोडे रजःपिञ्जराः।

---

129. C. D. E. F. om. तत्. All except A. om. इदम्. B. om. सीता ... च.

130. A. B. D. G. have not रामः. A. D. उपागतः. A. चरमाचले पश्चिमपयोधिवेलां च. B. G. °चूडम्.

131. A. om. here पश्चिम...च. C. E. इदानीं हि for नन्विदानीम् C. D. E. F. विकसन्ति.

132. A. om. अये. D. °अनुसारिणा.

133. C. om. this speech & the following. D. om. एव. All except A. B. om. निकुरम्ब. E. G. अनुकारिणा for कुटुम्बिना. A. B. D. E. कदम्बकेन & F. कदम्बेन for प्रकरेण.

134. D. F. om. एवमेतत् for which E. के. D. क्षाराब्धेः. E. F.

उन्मीलन्ति चकोरचञ्चुगहने च्छिन्नप्ररूढाश्रम-
त्कुर्वन्तः प्रियविप्रयुक्तरमणीगात्रे सुधांशोः कराः ॥ ९९ ॥

135 विभी०। एवमेतत्। इदानीं हि

शङ्करार्धतनुबद्धपार्वती-
कुङ्कुमाक्तकुचकोरकाकृतिः।
सूच्यते कमलिनीभिरुन्नम-
त्पद्मकोशकरलीलया शशी ॥ ९६ ॥

136 लक्ष्मणः। सकौतुकम्। अहो

ध्वान्तौघे शितिकण्ठकण्ठमहसि प्राप्ते प्रतीचीमुखं
प्राचीमञ्चति किंच दुग्धलहरीमुग्धे विधोर्धामनि।
एतत्कोकचकोरशोकरभसम्लानप्रसन्नोल्लस-
द्दृक्पातोर्मिकदम्बचुम्बितमिव त्रैलोक्यमाभासते ॥ ९७ ॥

137 रामः। एवमेतत्। इदानीं हि

शीतांशुस्फटिकालवालवलयद्रागुल्लसत्कौमुदी-
वल्लीनूतनपल्लवाञ्चितमिव प्राप्य क्षणं ताम्रताम्।
चञ्चन्मत्तचकोरचञ्चुघटनाच्छिन्नाग्रकाण्डस्नुत-
क्षीरस्यन्दनिरन्तराप्लुतामिव श्वेतं वियद्भासते ॥ ९८ ॥

---

च्चञ्चुकुहरे. A. प्ररूढाश्रमम् & प्ररोहास्तमः. D. वनिता for रमणी.

135. A. gives this speech to राम. A. B. विलोक्य. A. om. एवमेतत्. D. एवमेव तत्. C. D. E. F. om. इदानीं हि. C. E. तनुनद्ध. D. कुचकुङ्कुम. D. आदरात् for उन्नमत्. A. उन्नमत्यप्रकाशशर°.

136. A. B. G. एवमेतत् before अहो which D. F. om. A. B. उद्भासते.

137. A. om. एवम् ... भासते. G. वत्स before एवम्. C. E. पल्लवोञ्चित-

पुनर्विलोक्य सकौतुकम् । वत्स लक्ष्मण

पश्योदेति वियोगिनां दिनमणिः शृङ्गाररक्षामणिः
प्रौढानङ्गभुजङ्गमस्तकमणिश्चण्डीशचूडामणिः ।
तारामौक्तिकहारनायकमणिः कन्दर्पसीमन्तिनी-
काञ्चीमध्यमणिश्चकोरपरिषच्चिन्तामणिश्चन्द्रमाः ॥ ५९ ॥

138 लक्ष्मणः । एवमेतत् । अयमसौ

स्वैरं कैरवकोरकान्विदलयन्यूनां मनः खेदय-
न्नम्भोजानि निमीलयन्मृगदृशां मानं समुन्मूलयन् ।
ज्योत्स्नां कन्दलयन्दिशो धवलयन्नम्भोधिमुद्वेलय-
न्कोकानाकुलयंस्तमः कवलयन्निन्दुः समुज्जृम्भते ॥ ६० ॥

139 बिभी० । सखे सुग्रीव पश्य ।

मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलो-
च्छलत्तरलतारकाप्रकरकीर्णमुक्तागणः ।
पुरन्दरहरिद्दरीकुहरगर्भसुप्तोत्थित-
स्तुषारकरकेसरी गगनकाननं गाहते ॥ ६१ ॥

140 सुग्रीवः । सखे बिभीषण पश्य ।

यः श्रीखण्डतमालपत्रति दिशः प्राच्याः स्मरक्ष्मापतेः
पाण्डुच्छत्रति दन्तपत्रति वियल्लक्ष्मीकुरङ्गीदृशः ।

---

म्. A. B. G. घटना. A. D. F. om. सकौतुकम्. C. G. दीक्षा for रक्षा.

138. C. E. असौ हि. A. F. खेलयन् & C. E. दोलयन् for खेदयन्. F. G. समुन्मीलयन्. G. उद्वेलयन्वारिधीन्.

139. A. B. om. सखे. D. F. om. पश्य while A. adds one more. B. बहल for तरल. B. D. F. G. कपट for प्रकर.

140. A. C. E. add one more पश्य.

केलिश्वेतसहस्रपत्रति रतेः किंच क्षपायोषितः
क्रीडाराजतसीधुपात्रति शशी सोऽयं जगन्नेत्रति ॥ ६२ ॥

141 रामः । निर्वर्ण्य ।

सितकिरणकपोलामालिमालोकयन्ती
मिहिरविरहतापव्याकुलां व्योमलक्ष्मीम् ।
रजनिरमलताराशीकरैः सिक्तमस्याः
परिमलयति गात्रं चन्द्रिकाचन्दनेन ॥ ६३ ॥

पुनर्विमृश्य स्वगतम् ।

इन्दुरिन्दुरिति किं दुराशया
बिन्दुरेष पयसो विलोक्यते ।
नन्विदं विजयते मृगीदृशः
कोमलामलकपोलमाननम् ॥ ६४ ॥

पुनः सीतां प्रत्यपवार्य ।

अस्य त्वद्वदनस्य विभ्रमलवं लावण्यवारांनिधे-
रिन्दुः सुन्दरि दुग्धसिन्धुलहरीबिन्दुः कथं विन्दतु ।
उत्कल्लोलय लोचने क्षणमयं शीतांशुरालम्बता-
मुन्मीलन्नवनीलनीरजवनीखेलन्मरालश्रियम् ॥ ६५ ॥

---

141. B. G. °कपोलीम्. D. G. तिमिर for मिहिर. B. चन्द्रिकाचन्द्रिकेन. A. निर्वर्ण्य for विमृश्य. A. D. om. स्वगतम्. A. B. अये before इन्दुः. B. D. नन्वयम्. All except A. B. have श्यामकोमलकपोल &c. & तन्वि for अस्य. A. मुग्धसिन्धु. A. B. विन्दति. B. G. उत्कल्लोलविलोचने.

142 सीता । लज्जां नाटयति । विलोक्य सहर्षम् । अये कहं इमो उम्मीलिदो जेव्व

मुउलीकिदारविन्दो माणवईमाणवारणमइन्दो ।
तिहुअणणअणाणन्दो रअणीमुहचन्दणो चन्दो ॥ ६६ ॥

143 रामः । सखे सुग्रीव पश्य ।

इन्दोरस्य त्रियामायुवतिकुचतटीचन्दनस्थासकस्य
व्योमश्रीचामरस्य त्रिपुरहरजटावल्लरीकोरकस्य ।
कन्दर्पक्षोणिपालस्फटिकमणिगृहस्यैतदाखण्डलाशा-
नासामुक्ताफलस्य स्थगयति जगतीं कोऽपि भासां विलासः ॥६७॥

144 सुग्रीवः । अये रघुनाथ पुनरुक्तमिदमाचेष्टते चन्द्रमसः किरणविलासः ।

145 रामः । कथमिव ।

146 सुग्रीवः । नन्वत एव ।

कर्पूरादपि कैरवादपि दलत्कुन्दादपि स्वर्णदी-
कल्लोलादपि केतकादपि चलत्कान्ताद्दगन्तादपि ।

---

142 अये कथमयमुन्मीलित एव

मुकुलीकृतारविन्दो मानवतीमानवारणमहेन्द्रः ।
त्रिभुवननयनानन्दो रजनीमुखचन्दनश्चन्द्रः ॥

---

142. C. E. G. अहो for अये. A. om. इमो. B. उम्मीलदि. D. उम्मीलदु. B. जेव्वं & माणिणी. A. मत्त for माण. C. D. E. F. om. तिहुअण... णन्दो. B. G. अरविन्दो for आणन्दो. A. चन्द after मुह. C. D. E. F. चन्दो for चन्दणो.

143. A. B. G. repeat पश्य. A. C. E. व्योमस्त्री.

144. A. om. अये for which C. E. अयि. A. B. om. इदम् for which C. E. अयम्. A. B. G. आचष्टे. A. विकास.

146. A. B. D. F. अमत एव. C.

दूरोन्मुक्तकलङ्कशङ्करशिरःशीतांशुखण्डादपि
श्वेताभिस्तव कीर्तिभिर्धवलिता सप्तार्णवा मेदिनी ॥ ६८ ॥

147 रामः । अलं तुच्छप्रायजल्पितेन ।

148 बिभी० । देव तुच्छप्रायमेव जल्पितं सुग्रीवेण यदुक्तं मेदिनी धवलितेति । ननु त्रिलोकीतलमेव धवलितमिति वक्तव्यम् । संप्रति हि

समुन्नतघनस्तनस्तवकचुम्बितुम्बीफल-
क्वणन्मधुरवीणया विबुधलोकलोलभ्रुवा ।
त्वदीयमुपगीयते हरकिरीटकोटिस्फुर-
त्तुषारकरकन्दलीकिरणपूरगौरं यशः ॥ ६९ ॥

149 रामः । अयि लङ्केश्वर भवानपि किष्किन्धानाथमेवानुगतः । पुनर्विलोक्य सहर्षं सुग्रीवं प्रति ।

संरम्भोद्रिक्तनक्तंसमयदशमुखोच्चण्डदोर्दण्डहेला-
कैलासः सप्तलोकीजयमुदितमनोजन्मवादित्रशङ्खः ।
लोलाक्षीगण्डपालीलवणिमजलधेरुद्गतः फेनपिण्डः
पश्य व्योमावकाशं विशति विरहिणां दत्तशङ्कः शशाङ्कः ॥७०॥

निर्वर्ण्य स्वगतम् ।

अयं नेत्रादत्रेरजनि रजनीवल्लभ इति
भ्रमः कोऽयं प्रज्ञापरिचयपराचीनमनसाम् ।

---

D. E. F. put केतकात् in the first line & कैरवात् in the second

147. F. अस्तु for अलम्. A. B om. प्राय. D. अल तुच्छप्रायाः प्रजल्पितेन.

148. A. B. om. प्राय. D. om. एव. F. °प्रायजाल्पितम्. B. puts यदुक्तम् before जल्पितम्. A. B. त्रैलोक्यमेव. D. F. om. एव. C. E. मसृण for मधुर. D. G. वामभ्रुवा. A. तारगिरि for तुषारकर.

149. A. B. F. अये. A. B. G.

सुधानामाधारः स खलु रतिबिम्बाधरसुधा-
रसासेकासिक्तादजनि नयनात्पुष्पधनुषः ॥ ७१ ॥

150 लक्ष्मणः । आर्ये जानकि पश्य पश्य ।

आनन्दं कुमुदादीनामिन्दुः कन्दलयन्नयम् ।
लङ्घयत्यम्बराभोगं हनूमानिव सागरम् ॥ ७२ ॥

151 सीता । अये सुलक्खण लक्खण सो उण दाणिं काहिं रहुकुडुम्ब-संतावसमणचन्दणो पवणणन्दणो ।

152 लक्ष्मणः । आर्ये स रामचन्द्रेण बन्धुजनमानन्दयितुमयोध्यां प्रहितः ।

153 सीता । ता अम्हेहिं किंति विलम्बीअदि ।

154 रामः । बिभीषणमुखमालोकते ।

---

151 अये सुलक्षण लक्ष्मण स पुनरिदानीं कुत्र रघुकुटुम्बसंतापशमनचन्दनः पवननन्दनः ।

153 तदस्माभिः किमिति विलम्ब्यते ।

---

add मत after नाथ. A. सुग्रीवं प्रति सहर्षम्, & °सत्त्वः for नक्तम्. D. खण्ड for गण्ड. C. E. पुनर्निर्वर्ण्य F. स्वगतं निर्वर्ण्य & अये for अयम् All except A. B. have पराधीन for पराचीन. A. °मनसः. A. B. G. सेकास्निग्धात्.

150. B. F. om. one पश्य.

151. F. om. सु. B. om. लक्खण. D. अये सुग्गीव लक्खण ण सो &c. F. कवि before रहु. D. G. रहुउल. D. संतावस्स मयण° ( ? ).

152. D. अये. F. एव & D. G. एष after स. A. B. G. om. जन. B. G. आनन्दितुम्. G. अयोध्यायाम्.

153. C. D. E. F. om. ता. B. क्विवि.

154. D. om. मुख. D. अवलोकायति & F. अवलोकय.

155 बिभी०। निर्गत्य प्रविश्य च। देव इदं पुष्पकाभिधानं विमानरत्नमारुह्यताम्।

सर्वे आरोहणं नाटयन्ति।

156 रामः। सकौतुकम्। अये तदिदं विमानरत्नं यत्किल त्रिभुवनैकवीरः कुबेरानुजः कुबेरादाजहार।

157 लक्ष्मणः। सामर्षम्। आर्य कथमयं किष्किन्धामाहिष्मतीपतिभ्यां समभागविभक्तवीरलक्ष्मीकोऽपि त्रिभुवनैकवीर इति व्यपदिश्यते।

158 रामः। विहस्य। वत्स एवमेतत्।

तादृक्कठोरभुजयन्त्रनिपीडनेन
निःशब्दतामुपगतैर्दशकण्ठकण्ठैः।
यत्कीर्तिघोषणमकारि चतुःसमुद्र-
वेलासु किं स वचसां विषयः कपीन्द्रः॥ ७३॥

अपि च।

कोपप्रदीप्तनिजलोचनदीपपङ्क्ति-
निर्भिन्नसान्द्रतिमिरे स दशाननोऽपि।

---

155. C. E. निर्गम्य. A. आवेद्य for प्रविश्य. All except A. B. om. देव. A. B. G. तत् after इदम्. A. °अभिधम् & om. रत्न B. G. विमानावरोहम् ( G. °हणम् ).

156. F. om. सकौतुकम्. A. D. F. om. कुबेरानुजः. C. E. कुबेरादाजहार त्रिभुवनैकवीरः कुबेरानुजः.

157. B. सहर्षम्. C. D. E. F. इव after सामर्षम् All except A. B om. आर्य. C. D. E. F. पुनः after कथम्. D. F. इदम् for अयम्. A समसम. B. विभाग after भाग. D. F. G. om. वीर. B. om. एक.

158. A. B. om. वत्स. F. तथा हि after एतत्. B. भुजदण्ड. C. पी-

काराकुटीरकुहरे वसति स्म यस्य
सोऽप्येष हैहयपतिर्विषयो न वाचाम् ॥ ७४ ॥

किंतु परिभावय ।

यस्य द्राक्करवालकृत्तशिरसः कण्ठालवालस्थलीं
चूडाचन्द्रमसं निपीड्य निबिडं सिञ्चन्सुधानिर्झरैः ।
स्वां मेने शशिखण्डमण्डन इति ख्यातिं कृतार्थां हरः
पन्थानं दशकन्धरः स च कथंकारं गिरां गाहते ॥ ७५ ॥

निर्वर्ण्य । अये किमप्यस्य खलु त्रिकूटगिरिशिखरकण्ठीरवस्य दशकण्ठस्य लोकोत्तराणि चरितानि ।

यद्दोःशायिनि चन्द्रशेखरगिरौ भारावतारोन्नम-
न्नागाधीशफणावलीमणिरुचां पूरे समुन्मीलति ।
जातास्तुल्यमकालबालतपनाताम्राश्चतस्रो दिशो
देवस्यापि रुषा तुषारकिरणोत्तंसस्य तिस्रो दृशः ॥ ७६ ॥

159 लक्ष्मणः । आर्य

एष मे मनसि भासतेऽधुना
मूर्तिमानिव मनोरथो रथः ।
नास्ति नो यदधिरोहलीलया
दूरमागतवतामपि श्रमः ॥ ७७ ॥

---

डितेन. D. निःशङ्कताम् A. सुवचसाम्. A. B. om. अपि च. B. D. दीप्त for दीप. D. G. वह्नि for पङ्क्ति. F. °तिमिरः स & D. °तिमिरस्य. B. अन्यच्च for किन्तु परिभावय which A. om. C. E. तत् & G. वदत after परिभावय. D. F. °स्थलीः. G. दशखण्ड. B. कृतार्थः. C. E. गाहताम्. D. om. अये. C. E F. अयि. A. B. किमुच्यते अथवा खल्वस्य, D. किमाचर्यते ( ? ) वा खल्वस्य for our किमप्यस्य खलु out of which F. om. खलु. A. B om. गिरि.

159. A. B. रथो मनोरथः.

160 रामः । एवमेतत् ।

उल्लङ्घ्य नीरधिमतीत्य च दण्डकानि
नद्यौ च मेकलकलिन्दसुते व्यतीत्य ।
प्राप्ताः शिखण्डिशतमण्डितशाखिखण्ड-
मेते वयं शिखरिणं ननु चित्रकूटम् ॥ ७८ ॥

161 सीता । तिर्यग्विलोक्य । अयि कलिन्दणन्दिणि सच्चप्पसादासि जं पुणोवि णिअकुडुम्बस्स दिण्णदंसणासि ।

162 रामः । अये तदिदं निर्मुक्तविरोधमधुरश्वापदं भगवतो भारद्वाजस्याश्रमपदम् ।

163 लक्ष्मणः । एवमेतत् । अत्र हि

व्याजृम्भमाणवदनस्य हरेः करेण
कर्षन्ति केसरसटाः कलभाः किलैके ।
अन्ये च केसरिकिशोरकपीतमुक्तं
दुग्धं मृगेन्द्रवनितास्तनजं पिबन्ति ॥ ७९ ॥

अपि च ।

क्रीडन्माणवकाङ्घ्रिताडनशतैरुज्जागरस्य क्षणं
शार्दूलस्य नखाङ्कुरेषु कुरुते कण्डूविनोदं मृगः ।

---

161 अयि कलिन्दनन्दिनि सत्यप्रसादासि यत्पुनरपि निजकुटुम्बस्य दत्तदर्शनासि ।

---

160. C. E. विलोक्य. B. G. तथा हि after एतत्. A. भुवौ for सुते. B. G. खण्डित for मण्डित. D. F. जात for खण्ड. A. B. किल for ननु.

161. G. अहह in place of अयि. A. B. add भअवदि after अयि. C. पुणोवि हि. C. E. दिड for दिण्ण.

162. D. F. G. आयि. A. B. मुक्त & C. E विमुक्त. D. F. G. om. मधुर. D. भरद्वाज. B. आश्रमम्.

163. C. E. om. लक्ष्मणः । एवमेतत्. A. B. तथा हि. E. उज्जृम्भ.° A. om.

चञ्चच्चन्द्रशिखण्डितुण्डघटनानिर्मोकनिर्मोचितः
किंचायं पिबति प्रसुप्तनकुलश्वासानिलं पन्नगः ॥ ८० ॥

164 रामः। अये कथमयं संप्राप्त एव चक्रवाकरमणीसंरम्भसमयः प्रभातसमयः। तथा हि

एते केतकधूलिधूसररुचः शीतद्युतेरंशवः
प्राप्ताः संप्रति पश्चिमस्य जलधेस्तीरं जराजर्जराः।
अप्येते विकसत्सरोरुहवनीदृक्पातसंभाविताः
प्राचीरागमुदीरयन्ति तरणेस्तारुण्यभाजः कराः ॥ ८१ ॥

165 लक्ष्मणः। सकौतुकम्।

सद्यः संघटमानकोकमिथुनव्याजेन पीनस्तन-
द्वन्द्वव्यञ्जितयौवनोज्ज्वलरुचो निर्माय दिक्कन्यकाः।
दुर्दैवाक्षरमालिकामिव झटित्याकृष्य भृङ्गावलीं
लक्ष्मीमम्बुजिनीवनस्य तनुते देवस्त्विषामीश्वरः ॥ ८२ ॥

166 सुग्रीवः। बिभीषण पश्य पश्य।

उन्मीलन्ति निशानिशाचरवधूप्रोच्चाटनामान्त्रिकाः
सायंकालसुषुप्तपङ्कजवनप्रोद्बोधवैतालिकाः।

---

वदन & has कायम् for केसरसटाः. A. B. किलैते. A. मुग्धं मुनीन्द्र°. D. माणवकाण्ड. A. ताण्डवशतैः & अङ्कुरेण. C. D. E. F. चण्ड for चन्द्र.

164. C. E. रभसर & D. F. रभस for संरम्भ. B. F. om. प्रभातसमयः. D. प्रभातकसमयः. F. विकचत्. B. दृष्ट्या न for दृक्पात.

165. B. om. सकौतुकम्. A. °रुची. A. धिगिति & B. सागिति (?) for झटिति. A. अम्बुरुहाम्. All except A. B. have जन for वन. F. कुरुते for तनुते.

166. F. सखे बिभीषण. A. D. om. one पश्य. C. E. F. निर्वासना &

फुल्लत्पङ्कजकोशगर्भकुहरप्रोद्भूतभृङ्गावली-
झाङ्कारप्रणवोपदेशगुरवस्तीव्रद्युतेरंशवः ॥ ८३ ॥

167 बिभी॰ । एवमेतत् । तथा हि

आयान्त्या दिवसश्रियः पदतलस्पर्शानुभावादिव
व्योमाशोकतरोर्नवीनकलिकागुच्छः समुज्जृम्भितः ।
आतन्वन्नवतंसविभ्रममसावाशाकुरङ्गीदृशा-
मुन्मीलत्तरुणप्रभाकरकरस्तोमः समुद्भासते ॥ ८४ ॥

168 रामः । प्रिये जानकि

एतत्तर्कय चक्रवाकसुदृशामाश्वासनादायिनः
प्रौढध्वान्तपयोधिमग्नजगतीदत्तावलम्बोत्सवाः ।
दीप्तांशोर्विकसन्ति दिङ्मृगदृशां काश्मीरपङ्कोदक-
व्यात्युक्षीचतुराः सरोरुहवनश्रीकेलिकाराः कराः ॥ ८५ ॥

अपवार्य । पश्य पश्य ।

शिथिलयति सरागो यावदर्को नलिन्याः
कमलमुकुलनीवीग्रन्थिमुद्रां करेण ।
प्रविकसदलिमालाकैतवात्तावदस्याः
स्फुटमुदयति काञ्चीमध्यनीलाश्मरश्मिः ॥ ८६ ॥

---

D. निष्क्रंदना for प्रोच्चाटना. A. सायम्° & B. G. सालस° for कालसु°. A. B. G. झङ्कार.

167. A. B. पुञ्ज for गुच्छ. A. G. समुज्जृम्भते. A. B. अमृतांशु for अवतंस. A. B. D. समुज्जृम्भते.

168. D. F. G. om. जानकि. C. D. E. F. जगताम्. C. D. E. अपवार्य च. A. D. om. one पश्य. D. G. °मालागुञ्जितैर्मञ्जुशब्दा जनयति सुरमुच्चैः कामिनां कामिनीव.

169 सीता । विहस्य विलोक्य च । कहं इमो उम्मीलिदो जेव्व

पुव्वगिरिपम्मराओ पअडीकिदणअणसीअलसहाओ ।
कुङ्कुमाकिदङ्गराओ नलिणीवणवल्लहो देवो ॥ ८७ ॥

170 रामः । प्रकाशम् । अयि जानकि पश्य ।

तरलतरतरङ्गसङ्गदोला-
बहलविलासविलोलहंसमाला ।
अमरपुरतरङ्गिणीयमम्बा
सुरनरमङ्गलकारिणी न दूरे ॥ ८८ ॥

171 सीता । सहर्ष तदेव पठति तरलतरेत्यादि ।

172 रामः । सहर्षम् । वत्स लक्ष्मण इयमदूरे रघुकुलमङ्गलाङ्कुरप्ररोह-केदारधरणी तरङ्गिणी सरयूः । इयं च सरयूतरङ्गशीकरशीतलीकृतपरिसरा नगरीसीमन्तमाणिरयोध्या ।

---

169 कथमयमुन्मीलित एव

पूर्वगिरिपद्मरागः प्रकटीकृतनयनशीतलस्वभावः ॥
कुङ्कुमकृताङ्गरागो नलिनीवनवल्लभो देवः ।

---

169. C. D. E. F. om. विहस्य & च. A. अये कहं. B. उम्मीलदि & D. उम्मीलदु. E. °कोसदलहासो for सीअलसहाओ. F. हासो for सहाओ. D. कुङ्कुमअभङ्ग°. All except A. B. जण for वण.

170. A B. G. अये. C. E. repeat पश्य. B. रङ्ग & C. E. F. G. भङ्ग for सङ्ग. All except A. read हेला for दोला.

171. F. om. सहर्षम्. A. °तरतरङ्गेत्यादि for °तरेत्यादि which all others except B. om. A. adds समसंस्कृतप्राकृतं च & C. D. E. F. G. संस्कृतं प्राकृतं च.

172. A. om. सहर्षम्. C. D. E. repeat इयम्. In place of अदूरे C E. have मयारूढा & D. F. अध्यारूढा. A. स्वकुल. C. D. E. F. प्ररोहधारिणी & शिशिरीकृत. B. C. E. F. सीमान्तिनी.

173 लक्ष्मणः । सहर्षम् । अयमसौ भरतानुयातस्त्वदभिषेकाय कृतमतिर्भगवानरुन्धतीपतिः ।

दिलीपकुलमाणिक्यं सकलाशाप्रकाशकम् ।
आविर्भवन्तं भास्वन्तं भवन्तं च प्रतीक्षते ॥ ८९ ॥

तेन पुष्पकादवतरामः ।

174 रामः । वत्स प्रतीक्षस्व । इहैव तावत्सुलभसकलमण्डलालोकमाखण्डलाशामण्डनं भगवन्तं चण्डमरीचिं नमस्यामः । अञ्जलिं बद्ध्वा ।

प्राचीमुखैकतिलकं पूर्वाचलशेखरैकमाणिक्यम् ।
त्रिभुवनगृहैकदीपं वन्दे लोकैकलोचनं देवम् ॥ ९० ॥

175 नेपथ्ये । अयि वत्स रामभद्र ।

176 रामः । अहो अद्भुतम् ।

विकासयन्ती नितरां पद्मानीव मनांसि नः ।
प्रभेव भारती कापि भानुबिम्बाद्विजृम्भते ॥ ९१ ॥

---

173. D. om. सहर्षम्. D. भरतोऽनुगतः. A. D. G. अभिषेककृत. A. B. G. विकाशकम्. F. om. च & A. G. सम् for it. D. reads the second line thus:—आविर्भवन्तं भवतं भास्करं च प्रतीक्ष्यतः. C. D. E. F. तेन च. A. अवततार. C. E. F. इति after अवतरामः.

174. C. D. E. F. om. एव. A. सुलालित for सुलभ. A. B. मण्डल (B. लम्) लोकम्. C. D. E. F. लोकाखण्डल. A. B. G. कुङ्कुम for मुखैक & रोहण for शेखर. A. B. त्रैलोक्यभवनदीपम्. A. B. वन्देमहि (B. अहम्) कमलिनीनाथम्.

175. A. B. G. अये. D. om वत्स.

176. C. om. रामः for which E. रामभद्रः. A. B. पद्मिनीव. A. भास्वतीयम् for भानुबिम्बात्. C. D. E F. विराजते.

177 नेपथ्ये ।

यशःपूरं दूरं तनु सुतनुनेत्रोत्पलवनी-
तमस्तन्द्राचन्द्रातप तप सहस्राणि शरदाम् ।
इयं चास्तां युष्मच्छरशमितलङ्केश्वरशिरः-
श्रितोत्सङ्गा नन्दत्सुरनरभुजङ्गा त्रिजगती ॥ ९२ ॥

178 रामः । अनुगृहीतोऽस्मि ।

179 पुनर्नेपथ्ये । अन्यच्च ते किमाशास्महे ।

180 सुग्रीवः । अये तात दिनकर परिपूर्णमनोरथ एव रामभद्रः । अनेन हि

प्राप्ता निर्भरमुन्नतिर्निजगुणैराज्ञा पितुः पालिता
सुग्रीवश्च विभीषणश्च परमां राज्यश्रियं प्रापितौ ।
संग्रामे दशकन्धरः सुररिपुर्नीतो यशःशेषतां
दृष्टो बन्धुजनश्च हर्षविगलद्बाष्पोल्लसल्लोचनः ॥ ९३ ॥

तथापीदमस्तु ।

आवाल्याद्वदनाम्बुजे तनुभृतां सारस्वतं जृम्भतां
दैत्रे कौस्तुभधाम्नि चन्द्रमुकुटाद्वैता मतिः खेलतु ।

---

177. B. सुतनु तनु. D. नीलोत्पल. B. वती for वनी D °तप न for °तप तप. All except B. read गुणकथनपीयूषपटल for शर .. शिरः. D. श्रितोत्सङ्गा. B. °आनन्द्य & D. तुष्यत् for नन्दत्

178. A. om. रामः.

179. A. B. om. च. D. इति & F तत् for ते. B. कम् A. B. अपि before आशा°.

180. C. D. E. F. अयि. D. om. परि.° C. D. E. F. °रथश्च रामः. A. om. हि. D स for च. A. om. हर्षविगलत्. A. B. add भरतवाक्यम्

वाग्देव्या सह मुक्तवैशसरसा देवी च दीव्यादियं
शेषस्येव फणाञ्चलेषु सततं लक्ष्मीः सतां सद्मसु ॥ ९४ ॥

181 रामः । तदागच्छत । पुष्पकादवतीर्य गुरुं बन्धुजनं पौरांश्चानन्दयामः ।

इति पुष्पकादवतरणमभिनाटयन्तः सर्वे निष्क्रान्ताः ।

इति सप्तमोऽङ्कः समाप्तः ।

समाप्तमिदं प्रसन्नराघवं नाम नाटकम् ।

---

after अस्तु. D. G. आबालात्. A. B. मुकुटे प्रीतिः & G. °मुकुटेऽद्वैता. A. दिश्यादियम् & D. दिव्यां दिवम् for दीव्यादियम्. C. E. F. वसुमती, A. °भुजगताम्. B. °षु जगती, & D. भगवती for °षु सततम्. D. पद्मेषु for सद्मसु.

181. A. आगच्छ. B. आगच्छतु. A. B. D. (A. निज) गुरु (D. पुर for it) बन्धुपौरजनमानन्दयाम. (D. वः) F. गुरुबन्धुजनं पौरांश्च नन्दयामः. D. पुष्पकाव°. A. अवतरम्. F. संवृत्तम् & B. C. D. E. अभिवृत्तम् for अभिनाटयन्तः. G. इति सर्वे पुष्पकादवतरन्ति. For our सर्वे निष्क्रान्ताः, which is the reading of A., C. E. F. have इति निष्क्रान्ताः सर्वे, which is also the reading of B. D. G., but the latter put the words after and the former before the verse, जायन्तामविरामरामचरितक्रीडाभिरामाः सता (D. मा) मन्मीलज्जवमालिका (B. G. मालिका) विरचितसग्राम (D. भार) रम्या गिरः । याः कण्ठे (D. काले) वि (G. अपि) निवेश्य पेशलधियो रोमाञ्चली (B. °वली) लाञ्छि (D. ञ्छि) ताः कान्ताबाहुलताविलासमहिमाश्लेषांस्तृणं मन्व (F. न्य) ते (D. °श्लेषार्पण तन्वते); A. omits this verse.

177 नेपथ्ये ।

यशःपूरं दूरं तनु सुतनुनेत्रोत्पलवनी-
तमस्तन्द्राचन्द्रातप तप सहस्राणि शरदाम् ।
इयं चास्तां युष्मच्छरशमितलङ्केश्वरशिरः-
श्रितोत्सङ्गा नन्दत्सुरनरभुजङ्गा त्रिजगती ॥ ९२ ॥

178 रामः । अनुगृहीतोऽस्मि ।

179 पुनर्नेपथ्ये । अन्यच्च ते किमाशास्महे ।

180 सुग्रीवः । अये तात दिनकर परिपूर्णमनोरथ एव रामभद्रः । अनेन हि

प्राप्ता निर्भरमुन्नतिर्निजगुणैराज्ञा पितुः पालिता
सुग्रीवश्च विभीषणश्च परमां राज्यश्रियं प्रापितौ ।
संग्रामे दशकन्धरः सुररिपुर्नीतो यशःशेषतां
दृष्टो बन्धुजनश्च हर्षविगलद्बाष्पोल्लसल्लोचनः ॥ ९३ ॥

तथापीदमस्तु ।

आबाल्याद्वदनाम्बुजे तनुभृतां सारस्वतं जृम्भतां
द्वैते कौस्तुभधाम्नि चन्द्रमुकुटाद्वैता मतिः खेलतु ।

---

177. B. सुतनु तनु. D. नीलोत्पल. B. वर्ती for वनी D °तप न for °तप तप. All except B. read गुणकथनपीयूषपटल for शर . शिरः. D. श्रितोत्सङ्गा. B. °आनन्दा & D. तुष्यत् for नन्दत्

178. A. om. रामः.

179. A. B. om. च. D. इति & F तत् for ते. B. कम् A. B. अपि before आशा°.

180. C. D. E. F. अयि. D. om. परि.° C. D. E. F. °रथश्च रामः. A. om. हि. D. स for च. A. om हर्षविगलत्. A. B. add भरतवाक्यम्

